Jagadish
Jagadishivyadhikarandharma-
vachhinna bhav.
जगदीशी व्यधिकरणधर्मावच्छिन्नाभाव
Sanskrit
Paper - Printed
1930 Sambat (145 years old)
25 Folio
14.8" x 6"
Complete



# ॥अथजागदीशीव्यधिकरणधर्म्मावच्छिन्नाभावःप्रारभ्यते॥







जाव्य श्रीगणेशायनमः॥ नन्वीश्वरेच्छारूपस्य वाच्यत्वस्य गुणत्वादि समवायित्वात् समवायित्वं न तद्वधिकरणधर्म इत्यत आह। वाच्यत्वमिति। अस्माच्छब्दादयमर्थो बोध्य
१ व्य इतीश्वरेच्छाविषयत्वं पदार्थान्तरं वाच्यत्वं न तु तादृशेच्छामात्रमतिप्रशक्तत्वात्। तच्च न कस्यापि समवायीति भावः। समवायितयेति। मूले स्यस मवायि

समवायितयेति वाच्यत्वं न यथा समवायि तथा वक्ष्यते घटादि समवायितयेत्यर्थः इत्यप्याहुः प्रमेये साध्यके च भावत्वेनाभावानां अभावत्वेन भावानां
वन्हित्वेन निर्व्वन्हौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्यां च सर्व्वत्र प्रमेयमात्रस्याभावः सुलभः ननु पारिभाषिकमेवाव्यभिचरितत्वं
तथाहि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्वं सर्वत्र वाच्य
त्वाद्यभावस्य तथात्वाद्याबत्वोपादानम् अत एव भूतत्वमूर्त्तत्वोभयवान्मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वम
नोन्यत्वाद्यभावस्य तथात्वान्नातिप्रसंगः साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि
येन सम्बन्धेन हेतुः तेनैव तदधिकरणं बोध्यं तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्यातथात्वेऽ =
पि न क्षतिः एवं दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव प्रलये परमा
णावुत्पत्तिकाले चावयविनि तत्सत्वात् न च प्रतियोगिवत्तध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वं मानाभावात् अत एव अन्तराश्यामे रक्ते रूपं नास्तीति प्र
त्ययः न चैष रक्तिमध्वंसाद्यवगाहि पूर्व्वापररक्तिमध्वंसप्रागभाववति रक्तेऽपि तथा प्रत्ययप्रसंगात् तत्सामानाधिकरण्यञ्च स्वविशिष्टहेत्वधिकरणावच्छे
देन बोध्यं तेन गोत्वजन्यद्रव्यत्वप्रलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्म्मावच्छेदेन तद्वृत्तिकाले महाकाले वा वृत्तावपि यदा गोत्वं तदा गो
यत्रकालत्वं तत्र जन्यद्रव्यप्रलयावृत्तिवैत्यादौ नातिप्रसंगः हेतुमति प्रलये तत्सामानाधिकरण्याभावात् स्वविशिष्टेति विशेषणात् कपिसंयोगाभाववान्मेय
त्वादित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो

कारणतयेत्यर्थ इत्यप्याहुः। नन्विदं वाच्यं ज्ञेयत्वादित्यादौ समवायितया वाच्यत्वाभावरूपस्य साध्याभावस्य प्रसिद्धावपि प्रमेयवान् वाच्यत्वादित्यादि केवलान्वयिनि तद राम
प्रसिद्धेरनुद्धारात् मूलस्यान्यूनत्वमत आह॥ प्रमेयेति॥ भावत्वेनेति। भावत्वेनाभावानामभावः सर्वत्र सुलभ इत्यन्वयः। ननु भावत्वेनाभावो नास्तीति प्रतीतिरभावस्येवा १

भावत्वेनभावोनास्तीतिप्रतीतिर्भावस्यैवप्रतियोगित्वमवगाहते। नचैतावताप्रमेयमात्रप्रतियोगिकाभावसिद्धिरतआह। वह्नित्वेनेति। वह्नित्वेननिर्वह्नौसर्वेषामभावःसुलभ
इतियोजना। ननुजलेवह्नित्वेनप्रमेयंनास्तीतिप्रतीतिर्वह्निमात्रप्रतियोगिकाभावमवगाहते। नतुप्रमेयसामान्यप्रतियोगिकं वह्निमतितादृशप्रतीत्यनुपपत्त्या वह्निप्रतियो

जलादावपितदभावप्रत्ययप्रसंगात्। यत्समानाधिकरणानांसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभा
वानांप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यंतत्त्वंवातत् ज्ञेयत्वत्वादिनावाच्यत्वादीनामभावःसुलभएव शेषंदर्शितदिशावसेयमतआह प्रतियो
ग्यवृत्तिश्चेति। केचित्तुव्याप्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्यप्रतियोगितायाः अनवच्छेदकंहेतुसमानाधिकरणस्यव्याप्यवृत्तेः प्रतियोगिव्यधिक
रणस्यवा अभावस्यप्रतियोगितायाःसामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः एवञ्चव्याप्तेरव्यभि
चारिसम्बन्धरूपतापिसङ्गच्छते हेतौसाध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्यैवसाध्यतावच्छेदकेहेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छे
दकत्वस्यापिव्यभिचारत्वात् अवच्छेदकत्वञ्चेह। तत्पर्य्याप्त्यधिकरणत्वंतेनविशिष्टवह्न्यभावस्यह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्यचप्रतियोगिता
वच्छेदकत्वेऽपिवह्नित्वस्यनक्षतिः सत्त्ववतिगुणादौसंयोगाद्यभावोऽपिव्याप्यवृत्तिर्वक्ष्यमाणोवाप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेद
कत्वमिहापि बोध्यम्भवतिचगुणत्वगुणावृत्तित्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरि
क्तवृत्त्येवसंयोगत्वमित्याहुः। साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्व यत्समानाधिकरण
साध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वंनास्तितत्त्वंवाव्याप्तिरिति तुनयुक्तंसर्वत्रसाध्याभावपदवैयर्थ्यात्। यत्तुसाध्याभाववति यद्वृत्तेःप्रकृतानु
मितिविरोधित्वं नास्तितत्त्वंव्याप्तिरितितन्न अनुमित्यविरोधित्वज्ञानस्यानुमितिजनकत्वेसाध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितयाव्यभिचारिण्यति
प्रसंगात्। केचित्तुयावन्तःसाध्याभावाःप्रत्येकंतत्तत्सजातीयायेतत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्त्वम्। साजात्यञ्चसमानासमानाधिकरणधर्म्मा

गिकाभावावगाहित्वस्यावश्यकत्वादतआह। अवृत्तीति। तथाचगगनत्वेनप्रमेयंनास्तीतिप्रतीत्यैवप्रमेयसामान्यप्रतियोगिकाभावसिद्धेः नहितत्रापिगगनमात्रप्रतियो
गिकत्वभासतद्वृत्तिवक्तुंशक्यते विनिगमनाभावेनप्रमेयमात्रप्रतियोगिकत्वावगाहनेबाधकाभावात् कालिकसंबन्धेनगगनत्वादिविशिष्टस्यप्रमेयस्यसर्वत्रनाभावः॥

क

जा०व्या० २ संभवतीत्यत उक्तं। अवृत्तिमात्रवृत्तीति। तथाच यादृशसम्बन्धेन गगनत्वादेर्वृत्तिमद्वृत्तित्वं तादृशसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिताको गगनत्वादिना प्रमेयसामा-
न्याभावो वाच्य इति भावः। ननु कालिकसम्बन्धेन प्रमेयसाध्यके तेन सम्बन्धेन साध्याभावस्यैवाप्रसिद्धिः कार्या साच कालिकसम्बन्धेन गगनत्वेन प्रमेयं नास्तीति प्रतीत्या नसं-

वच्छिन्नप्रतियोगिताकत्वान्यतररूपेण साध्याभावश्च पूर्वोक्तद्वितीयपरीक्षाप्रत्येतव्यो व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो वा तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः तद्वद्वृत्तित्वाभावश्च तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको बोध्यः तेन साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यं तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः इत्थञ्च साध्याभावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानो ग्राह्यः तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः। यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नप्रतिव्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वं साधनस्य तादृशाभावप्रतियोगित्वं तदवच्छेदकत्वं वा साधनतावच्छेदकस्येति तु न वक्तव्यम् द्रव्यं सत्त्वादित्यादौ सत्त्वादेर्गुणकर्मान्यत्वविशिष्टसत्त्वत्वाद्यवच्छिन्नप्रतियोगिताकतादृशाभावप्रतियोगित्वादतिव्याप्तेः द्रव्यं प्रमेयादित्यादौ प्रमेयत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधिकरणप्रतियोगित्वस्याप्रसिद्धेः। यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रतिव्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं व्याप्तत्वमित्याहुः। परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः येन सम्बन्धेन हेतुता तेनैव वृत्तिमत्त्वमपि बोध्यं तेन व्यधिकरणधर्मावच्छिन्नवह्न्यभाववति संयोगेन यावृत्तिस्तदभावस्य जात्यादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः साध्याभावश्च पूर्ववद्बोध्यः तद्वद्वृत्तित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन समानाधिकरणेन साध्या- वाच्यं

भवति तत्सम्बन्धेन गगनादेर्वृत्तिमत्त्वमते तादृशप्रतीतेर्गगनप्रतियोगिकत्वावगाहितयैवोपपत्तौ प्रमेयांतरप्रतियोगिकत्वे मानाभावादत आह विरुद्धेति। तथाच घटत्वपटत्वा- राम०
भ्यां प्रमेयं नास्तीति प्रतीत्या निखिलप्रमेयप्रतियोगिकस्तत्रात्यन्ताभावः सुलभ इति भावः। इदमुपलक्षणं। संयोगादिसंबन्धेन घटत्वादिकमपि प्रमेयत्ववदवृत्तिरिति तत्संबंधेन घटत्वाद्य २

क

वच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावोपि बोध्यः। अप्रसिद्धिदोषस्यापि सत्वान्मूले प्रतियोग्यवृत्तिइत्यादिदोषान्तरं किमित्युपात्तमतस्तद्वक्तारार्थमाशंकते। नन्विति। पारिभा
षिकमेवेत्येवकारेण नव्यभिचारोऽव्यभिचारइति योगार्थोऽव्यवच्छिद्यते। अव्यभिचरितत्वमिति। अथेदं वाच्यमित्यादिग्रन्थाभिप्रेतमिति शेषः। तथा च न चैवं घटइत्यादिमूल०

भाववद्वृत्तित्ववृत्तिनाबाधर्म्मेणानवच्छिन्नप्रतियोगिताको बोध्यः तेनालोकाद्यवृत्तित्वेन रूपेण यो वह्निसामान्याभाववद्वृत्तित्वस्य पश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावा
धिकरणीभूतमहानसवृत्तित्वादेरभावस्तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वविरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्नस त्वेपि न क्षतिरित्याहुः। अन्येतु वृत्तिमद्वृत्तयो या
वन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वं तादृशवृत्तित्वाभावश्च स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः प्रयोजनन्त्वोक्तप्रायम्
साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्म्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरतः समुदायेति। साध्याभा
वश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः तेन समवायेन वह्नेः साध्यत्वे धूमे संयोगेन च तथात्वे वह्न्यवयवत्वे पर्व्वतवह्न्यवयव संयोगेन च पर्व्वतस्य वह्न्यवयव०
स्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेपि नातिव्याप्तिः तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोऽपि बोध्यः तेन यत्र पृथिवीत्वा
भावादौ साध्ये तत्तद्व्यक्तिवृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावकूटाधिकरणमप्रसिद्धम्। तत्र सद्धेतौ पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्या
दाववर्त्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिरतिव्याप्तिर्वा नाप्यभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरि
त्याहुस्तन्न द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः अपि चेदं पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ
द्रव्यत्वत्वावच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तेः द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगिताया पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्त०
त्वात्। किञ्च रूपाभावसाध्यके सद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपान्यत्त्वधिकरणाप्रसिद्धेः। यावतामभावानामेकाधिकरण्यं तावतां समुदाये विवक्षिते
पीटं पृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वाद्रूपवदन्यत्वाद्वेत्यादावतिव्याप्तिः तत्र तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन

स्य केवलान्वयिनोऽव्यभिचरितत्वेनालक्ष्यताप्रदर्शनपरत्वान्न पूर्वे मूलासंगतिरिति ध्येयं। यदित्यादि। अत्र यत्समानाधिकरणाद्धत्यस्यानुक्तौ साध्यतावच्छेदकावच्छिन्नव्याप
कतावच्छेदकप्रतियोगिताकस्यात्मत्वसामान्याभावस्यापि यावदन्तर्गतत्वात्तस्य च व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यधिकरणे केनापि सम्बन्धेनावृत्तित्वादयमात्मा

त्वानादित्यादावव्याप्तिरतस्तदुपात्तमित्यग्रेस्फुटीभविष्यति नचात्मत्वाद्यभावोपिसमानकालीनत्वादिसम्बन्धेनप्रतियोग्यधिकरणवृत्तिः तथाविधसंबन्धानांवृत्त्यनियामक
कत्वात्। क्वचिदपितेनसंबन्धेनवृत्तित्वाप्रतीतेः इत्थंचहेतुसमानाधिकरणत्वमपिहेतुतावच्छेदकसम्बन्धेनहेत्वधिकरणाधेयत्वंग्राह्यं तेनात्मत्वाद्यभावस्यापिहेत्वधिक

तद्वृत्तितद्धेतोरवृत्तेः वस्तुतोनिखिलानामेवरूपाणांतादृशाभावसहस्रसमानाधिकरणत्वात्समानाधिकरणयावदभावाधिकरणाप्रसिद्धिर्दुर्वारैव। किञ्चहेतुता
वच्छेदकसम्बन्धेनयासाध्याभाववतिवृत्तिस्तदभावोवक्तव्यः अन्यथाधूमादावव्याप्तिःसाध्यतावच्छेदकसम्बन्धेनसाध्याभाववतिकालादौवृत्तिमन्मात्रस्यैववृत्तेर्व्य
भिचारिण्यतिप्रसंगोवातथाचसत्तादिसाध्यकेसंयोगेनसमवायेनवाहेतावव्याप्तिः। साध्याभाववतितेनसम्बन्धेनवृत्तेरप्रसिद्धेः साधनसमानाधिकरणत्वेनसाध्या
भावाविशेषणीयाइतिचेद्विशेष्यन्तां तथापिभूतत्वमूर्त्तत्वाद्योरन्यतरत्वेनाभावेसाध्येस्पर्शवदन्यत्वाद्यावतिव्याप्तिः तादृशसाध्याभावसमुदायवतिपृथिव्यादौतस्या
वृत्तेः। किंचमहाकालान्यत्वादिसाध्यकेव्यभिचारिणिकालिकविशेषणहेतावतिव्याप्तिः तादृशसाध्याभावसमुदायवतिमहाकालेतेनसम्बन्धेनवृत्तिमन्मात्रस्यैव
वृत्तेः एतेनसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावायावन्तो
वृत्तिमद्वृत्तयस्तद्वत्त्वंव्याप्तिः केवलान्वयिनःसंयोगाद्यभावस्याभावाः संयोगादयोनव्याप्यवृत्तयः एवंसाध्यस्यगुणसामान्यस्याभावोद्रव्यत्वाधिकरणेउत्पत्तिकाला
वच्छेदेनवर्त्तमानोपिनव्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगिताकः क्वचिदप्रसिद्ध्यादिसम्पादकाःपुनरभावानहेतुसमानाधिकरणाः उक्तसमुदायाधिकरणवृत्तित्व
तदभाववृत्तिमत्त्वानिपूर्वोक्तरीत्याप्रत्येतव्यानीत्यादिकमपास्तम्। तद्विशिष्टेति। विशेषणतावच्छेदकविशिष्टज्ञानस्यविशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् अभावप्रत्ययेहिघट
त्वादिविशिष्टस्यघटादेःप्रतियोगित्वमवगाहमानोविशेषणस्यापिघटत्वादेस्तदवच्छेदकत्वमवगाहतेनस्वातन्त्र्येणघटोनास्तीत्येवप्रतीतेः तदिहाभावप्रत्ययोयदिव्यधि
करणधर्मेणविशिष्टप्रतियोगित्वंनावगाहतेनावगाहतएवतदातस्यापिप्रतियोगितावच्छेदकत्वम् अथावगाहतेतर्हिभ्रमएवनचततोऽर्थसिद्धिरितिभावः। यदिपुन
रानुभविकोलौकिकानांस्वरसवाहीघटत्वेनपटोनास्तीत्यादिप्रत्ययोनतदातादृशाभावनिवारणंगीर्वाणगुरूणामपिशक्यमितिमन्तव्यम्॥ ॥ ॥ ॥ ॥

रणासंबन्धित्वान्नोक्तदोषतादवस्थ्यं नचहेतुसमानाधिकरणाइत्यपहायसाध्यसमानाधिकरणायावंतस्तादृशाभावाःस्वविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेनप्रतियो
गिसमानाधिकरणास्तद्धर्मवत्त्वमित्येवकुतोलक्षणंनकृतमितिवाच्यं द्रव्यमात्मत्वादित्यादौमहाकालेसाध्यसमानाधिकरणद्रव्यत्वादिसामान्याभावस्यस्वविशिष्टहेत्वधिक

णाप्रसिद्धेः॥ तत्राव्याप्तिप्रसंगात्। दैशिकविशेषणतासंबन्धेनसाध्याधिकरणवृत्तित्वोक्तौचगौरवात्। यत्तुयत्समानाधिकरणायावंतस्तादृशाभावाःसाध्यसमानाधिकर
णास्तत्वमित्येवास्तुलक्षणंस्वस्वप्रतियोगिसामानाधिकरण्यस्यप्रवेशेबीजाभावादिति तत्तुच्छं तथासति यत्समानाधिकरणायावंतोऽभावाःसाध्यसमानाधिकरणास्त
त्वमित्यस्यैवसम्यक्त्वे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकांशस्यव्यर्थतापत्तेस्तन्मात्रोक्तौचविनापिव्यधिकरणधर्मावच्छिन्नाभावलक्ष
णसंभवेप्रतियोग्यवृत्तिश्चेत्सादेरवतारकत्वानुपपत्तिः। यदपियत्समानाधिकरणाःसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकायावन्तोऽभावादैशिक
विशेषणतयोभयवृत्तयस्तत्वमित्येवलक्षणमस्तु। स्वस्वप्रतियोगिसामानाधिकरण्यांतर्भावेगौरवात्। हेतुसमानाधिकरणस्यतत्तद्योगोलकान्यत्वाभावस्यैवदैशिकवि
शेषणतयोभयवृत्तित्वाभावाद्धूमवान्वह्नेरित्यादावतिव्याप्तिविरहादितितन्मंदं। हेतुसमानाधिकरणस्यवह्निसंयोगाद्यात्मकाभावस्यदैशिकविशेषणतयोभयवृत्तित्वविरहेण
वह्निमान्धूमादित्यादावव्याप्तिप्रसंगात्। नचभावभिन्नस्यैवहेतुसमानाधिकरणाभावस्यप्रवेशान्नैषदोषः तद्घटभिन्नघटत्वादित्यादावतिव्याप्त्यापत्तेः। तद्घटभिन्नत्वा
द्यभावस्यतद्घटत्वादिस्वरूपत्वेनभावत्वात् घटत्वादिनातद्घटभिन्नत्वाद्यभावस्यचोभयवृत्तित्वादिति अत्रचहेतुसमानाधिकरणायावंतस्तादृशाभावाःस्वप्रतियोगिसत्ता
ग्रहविरोधिताघटकसम्बन्धेनोभयवृत्तयस्तत्वमितिकृतेनक्वाप्यनुपपत्तिरित्यलंपल्लवितेन। अत्रचयत्पदंयद्धर्मावच्छिन्नपरं अग्रेचतत्वमित्यस्यहेतुतावच्छेदकीभूत
तद्धर्मवत्त्वमित्येवार्थः। तेनसकलधूमव्यक्त्यनुगतायावह्निव्याप्तेर्नालाभः नवाज्ञानवान्मनोन्यत्वेसति आत्ममनःसंयोगादित्यादौमनसिहेतुसमानाधिकरणस्यात्मत्व
सामान्याभावस्यस्वविशिष्टहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिः यत्तुद्रव्यगुणकर्मान्यत्वेसतिसत्वादित्यादौहेतुसमानाधिकरणस्यद्रव्यत्वाद्यभा
वस्यातथात्वाद्व्याप्तिरतोयत्पदस्ययद्धर्मावच्छिन्नपरत्वमिति तन्नद्रव्यत्वाद्यभावस्यापिकालिकादिसंबंधेनस्वविशिष्टयद्धेतुतावच्छेदकावच्छिन्नहेत्वधिकरणंजन्यद्रव्यादितदवच्छेदे
नप्रतियोगिसामानाधिकरण्यात्तत्राव्याप्तिविरहात् साध्यतेत्यादिसाध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदिकायदभावप्रतियोगितातादृशाभावाइत्यर्थः। अत्रचविशिष्टस
त्तावान्जातेरित्यादौविशिष्टसत्तात्वावच्छिन्नाभावस्यैवसत्तास्वरूपसाध्यव्यापकतावच्छेदकप्रतियोगिताकतयातस्यस्वविशिष्टहेत्वधिकरणावच्छेदेनप्रतियोगिसामानाधिकरण्यादतिव्या
प्तिरतः साध्यतावच्छेदकावच्छिन्नेति तथाचद्रव्यत्वाद्यभावस्यैवनिरुक्तयावदंतर्गतस्यातथात्वान्नातिव्याप्तिः साध्यवत्त्वंचात्रसाध्यतावच्छेदकसंबंधेननिवेश्यं तेनवस्तुमात्रस्यैवविषयतासंबं
धेनज्ञानवत्त्वाद्घटत्वादिनावाच्यत्वाभावस्यैवसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वेपिसमवायेनज्ञानस्यसाध्यत्वेद्रव्यत्वादिहेतौनातिप्रसंगः समवायसंबंधावच्छिन्न
ज्ञानवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकस्यात्मत्वाभावस्यैवप्रतियोग्यसमानाधिकरणत्वात्। अत्रचसाध्यवन्निष्ठाभावः प्रतियोगिव्यधिकरणत्वेनविशेषणीयः। तेनसाध्यव

न्मात्रएवसमवायित्वावच्छिन्नवाच्यत्वाभावप्रतियोगित्वेचघटाद्यभावस्यसत्वेपिनसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावस्याप्रसिद्धिः। इत्थंचतत्सम्बन्धेनस्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदकोयोयस्तदन्यत्वेसतितत्संबन्धावच्छिन्नाधेयतावच्छेदकत्वरूपतत्संबन्धेनसाध्यव्यापकतावच्छेदकत्वंनिरुच्यतादृशव्यापकतावच्छेदिकायदभावप्रतियोगितातादृशाभावाः प्रवेशनीयाः। नचतत्संबन्धावच्छिन्नाधेयतेत्यादिकंव्यर्थं द्रव्यत्वाद्यभावप्रतियोगितायामपिसंयोगसम्बन्धेनवन्ह्यादिव्यापकतावच्छेदकत्वापत्त्यायावदन्तर्गतस्यतत्संबन्धेनद्रव्यत्वाद्यभावस्यसाध्यव्यापकताघटकीभूतसंयोगादिसंबन्धेनप्रतियोगिसामानाधिकरण्याप्रसिद्ध्यासद्धेतुमात्रएवासंभवस्यावारणार्थं तदुपादानात् संयोगसंबन्धावच्छिन्नाधेयत्वस्यद्रव्यत्वादावसत्वेनद्रव्यत्वादिनिष्ठप्रतियोगित्वस्याधेयतानवच्छेदकत्वात् तत्संबन्धेनस्वावच्छिन्नानधिकरणत्वंचतत्सम्बन्धेनस्वावच्छिन्नाधिकरणसामान्यभेदः तेनवन्ह्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणगगनाभयभेदस्यघटत्वादिनावन्ह्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणभेदस्यचवन्ह्यादिसाध्यवतिसत्वेपिनक्षतिः अत्राभावाइतिस्वरूपकथनं वस्तुतः साध्यवन्निष्ठाभावस्यतत्संबन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमेव तत्संबन्धेनसाध्यव्यापकतावच्छेदकत्वंवाच्यं तत्रचसाध्यवन्निष्ठत्वमभावस्यस्वरूपसंबंधेनग्राह्यं तेनस्पंदः कालत्वादित्यादौ स्पंदत्वाद्यभावस्यापिकालिकसम्बन्धेनसाध्यवतिवृत्त्यायावदन्तर्गतत्वात्समवायित्वेनवाच्यत्वाद्यभावस्यचतादृशप्रतियोगिसमानाधिकरणत्वेपिनातिव्याप्तिः इत्थंचजातिसामान्याभावादेरपिवन्ह्यादिव्यापकतयातत्प्रतियोगिकस्यजात्यादिस्वरूपस्यहेतुसमानाधिकरणाभावस्यजातिसामान्याभावात्मकप्रतियोग्यसमानाधिकरणत्वादसंभवापत्तिरतोभावाइत्युक्तंभावभिन्नाइतिचतदर्थः। यथाचसामानाधिकरण्येनानवच्छेदकत्वघटितायांव्यापकतायांनदोषस्तथाग्रेप्रपंचयिष्यते नव्यास्तुसाध्यतावच्छेदकेत्यादि साध्यतावच्छेदकावच्छिन्नाधिकरणानियावंति तत्प्रत्येकवृत्तिवृत्तिप्रतियोगिताकेत्यर्थः। नन्वेकमात्रवृत्तिसाध्यकसद्धेतावव्याप्तिः। तत्रयावत्वस्यानुपादेयत्वात् शब्दैक्यस्याकिंचित्करत्वात्। यद्वा साध्यतावच्छेदकावच्छिन्नसमानाधिकरणायावंतोधर्मास्तत्प्रत्येकसमानाधिकरणवृत्तिप्रतियोगिताकेत्यर्थः इतिप्राहुः यत्तुसाध्यवद्वृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताकेत्यर्थइति तन्न केवलान्वयिसाध्यकसद्धेतौतादृशप्रतियोगित्वाप्रसिद्ध्याव्याप्तेः गगनस्वरूपाभावस्यतादृशत्वेपिहेतुसमानाधिकरणत्वासंभवादिति। अत्रव्यापकतावच्छेदकप्रतियोगिताकाइत्यत्रव्यापकातायाअवच्छेदोयस्येतिबहुव्रीहिकप्रत्ययः। तेनप्रतियोगितयासमं अवच्छेदिकापदस्यसमासेकोपधत्वेपिपुंवद्भावः। तद्धितवुन्कोपधस्येवपुंवद्भावनिषेधादित्यभियुक्ताः। सर्वत्रेति। सद्धेतावसद्धेतावित्यर्थः। तथाचयावत्वानुक्तावतिव्याप्तिरेवस्यान्नाव्याप्तिरितिभावः सकलव्यभिचारिणीत्यर्थइत्य

नेै केचित्तु सर्वत्रेति। सकलहेत्वधिकरणावच्छेदेनेत्यर्थः दूषयन्त्याहुः वाच्यत्वाद्यभावस्येति। घटत्वादिना वाच्यत्वाभावस्य चेत्यर्थः तथात्वात् प्रतियोगिसमानाधिक
रणत्वात् तथा च धूमवान्वह्नेरित्यादावतिव्याप्तिवारणार्थमेव यावत्पदोपादानमिति भावः। ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावो न तथैव वाच्यत्वाद्यभा
वमादायोक्तस्यातिप्रसंगस्य व्युदाससंभवात्। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां यावत्त्वोपादाने गौरवग्रस्तमत आह। अत एवेति नि
रुक्ताभावे यावत्त्वोपादानादेवेत्यर्थः अन्यथाभूतत्वाद्यभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकान्यत्वाद् भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्य च तादृशप्रति
योगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः स्यादेवेति भावः यत्तु साध्यप्रतियोगिको यत्किंचिदभावो यद्धर्मावच्छिन्नहेत्व
धिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वमित्येव लक्षणमस्तु कृतं यावत्त्वगर्भनिरुक्त्या धूमवान्वह्नेरित्यादौ घटत्वेन धूमाभावस्यापि तादृशहेत्वधिकरणाव
च्छेदेन प्रतियोग्यसमानाधिकरणत्वादतिव्याप्तिव्युदासादित्याशंक्यात एवेत्यादिकमवतारयन्ति। तत्तु च्छेत तादृशशंकायां धूमवान्वह्नेरित्यादिप्रसिद्धस्थल एव वह्निधूमोभ
यत्वावच्छिन्नाभावमादायातिव्याप्तिसंभवे भूतत्वमूर्तत्वोभयवानित्याद्यनुधावनस्य संदर्भविरोधापत्तेः। यदपि यादृशाभावस्य प्रतियोगिता व्यापकसाध्यतावच्छेदकं
तादृशः कश्चिदभावो यद्धर्मावच्छिन्नाधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ वाच्यत्वाद्यभावमादायातिव्याप्तिवारणसंभवाद्याव
त्त्वगर्भलक्षणं गौरवग्रस्तमत उक्तं। अत एवेत्यादि। तदप्यसंगतं प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन वह्निधूमोभयत्वादेस्तद्व्यापकत्वासंभवाद्वह्निधूमोभय ध्या
वान्धूमादित्यादावव्याप्तिभयेन तादृशनिरुक्तेः शंकितुमप्यशक्यत्वात्। ननु प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोग्यधिकरणत्वं साध्यनिरूपितसाध्यतावच्छेदक
संबन्धेन ग्राह्यमित्यलं यावत्त्वनिवेशेनेत्यत आह। अत एवेत्यादौ त्यपि वदन्ति नव्यास्तु ननु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठयादृशप्रतियोगिताको यत्किं
चिदभावो यद्धिकरणावच्छेदेन तादृशप्रतियोगिताश्रयसमानाधिकरणस्तत्त्वमित्यस्यैव सम्यक्त्वे यावत्त्वगर्भलक्षणारंभो गौरवग्रस्तः। प्रमेयवान्वाच्यत्वादित्यादौ विरु
द्धघटत्वपटत्वोभयगगनाद्यवच्छिन्नप्रतियोगिताकप्रमेयाभावमादायलक्षणसंभवात्। गगनादेर्वृत्तिमत्त्वलक्षणधर्मत्वाभावात्। सामान्याभावीयान्यप्रतियोगित्वस्वरूपस
म्बन्धेन प्रत्याश्रयं विभिन्नमुपेयमतो विरुद्धघटत्वपटत्वाभ्यां प्रमेयमात्रस्याभावमादायैव धूमवान्वह्नेरित्यादौ नातिप्रसंगः। न चानवच्छिन्नत्वात्तद्वैयर्थ्यं वह्निधूमोभयत्वा
वच्छिन्नाभावमादाय धूमवान्वह्नेरित्यादावतिव्याप्तेर्वारकत्वात्साध्यनिष्ठपदमपि तदर्थमेव। अन्यथा गगनाद्यवच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावमादाय व्यभिचारि
मात्रेतिव्याप्त्यापत्तेरित्यत आह। अत एवेति। इत्थं च भूतत्वविशिष्टमूर्तत्वाद्यभावस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रतियोगिताकतया तस्य प्रतियोगिसामा

यादृशप्रतियोगित्वावच्छिन्नसमानाधिकरण्याभावप्रतियोगितानवच्छेदकं
साध्यतावच्छेदकं। तादृशप्रतियोगितकोन्योन्याभावोद
प्रतियोगिताको कश्चिद्भावो

जा॰व्य नाधिकरण्यं नातिव्याप्तिं संपादयती स्याशयेन द्वित्वाद्यवच्छिन्नाभावपर्यन्तस्य प्रतियोगिसामानाधिकरण्यमपि साधु संगच्छते। परं तु प्रकृत साध्यव्याप्यतावच्छेद
५ कप्रतियोगिताको यः कश्चिद् भावो यद् धिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तत्त्वमेवाव्यभिचरितत्वं कुतो नोक्तं भूतत्वमूर्तत्वोभयत्वावच्छिन्नप्रतियोगिताव्य
केस्तादृशोभयात्मकसाध्यव्याप्यतावच्छेदकत्वाभावाद्वेतादृशोभयाभावमादायातिव्याप्त्यसंभवादिति विभावनीयमिति प्राहुः भूतत्वमात्मभिन्नत्वे सति विशेषगुण
वत्त्वं तच्च न व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितकल्पे भूतत्वमूर्तत्वोभयस्य व्यापकं तादृशोभयवति घटादावुत्पत्तिक्षणावच्छेदेन विशेषगुणत्वाद्यवच्छिन्नाभा-
वसत्त्वात् तदुक्तं मनोन्यत्वेति साध्यस्यैवाभावमादाय नातिव्याप्तिः सुतरां वस्त्वंतरस्येवेति कैमुतिकन्यायेनोक्तं। मनोन्यत्वेइतीत्यपि वदंति अतथात्वादिति स्वविशि
ष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादित्यर्थः। मनस्येव व्यभिचारादिति भावः। ननु यत्समानाधिकरणा यावंतोभावाः प्रतियोगिसमानाधिकरणा
स्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नेत्यादिव्यर्थं नच साधनसमानाधिकरणगोत्वाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरण
त्वादसंभव इति वाच्यं तस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् नचैवं रीत्या व्यभिचारिण्यतिव्याप्तिरिति वाच्यं अभावस्य
समानाधिकरणधर्मावच्छिन्नस्वकीयस्वप्रतियोगिताश्रयसामानाधिकरण्यं तदन्यप्रतियोगितायाः एव व्याप्यवृत्तिनानिरूपकतया धूमाद्यभावस्य पूर्वक्षणवृत्तित्ववि
शिष्टस्वाभावनिष्ठप्रतियोगितायाः अतथात्वेन धूमवान्वह्नेरित्यादावतिव्याप्त्ययोगात् तत आह। साधनेत्यादि। गोत्वादीत्यादिपदेन गगनादिसंग्रहः तथा च तद्दृत्तानु
क्तावसंभव एवस्यादिति भावः ननु एवं यत्समानाधिकरणा यावंतः साध्यप्रतियोगिकाभावाः साध्यतावच्छेदकसंबंधेन प्रतियोगिसमानाधिकरणास्तत्त्वमित्येवोच्य
तां तावतैव गोत्वाद्यभावमादायासंभवस्य व्युदासादत आह। तत्तदिति। तथा चोक्तविवक्षया द्रव्यत्वादिकव्यक्तिसाध्यकसद्धेतौ लक्षणसंभवेपि वह्निमान्धूमाज्जातिमान्सत्ता
दित्यादौ साध्यप्रतियोगिकानां तत्तद्वह्न्यभावानां आत्मत्वाद्यभावानां च प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरिति भावः नच साध्यव्यापकप्रतियोगिकादस्यैव सम्य
क्त्वे व्यापकतावच्छेदकप्रतियोगिताकपर्यंतं व्यर्थमिति वाच्यम्। तत्तत्साध्यव्यक्तीनां गगनादीनां च प्रमेयत्वादिप्रकारेण साध्यव्यापकतया तदभावमादायासंभवापत्तेः
न च वृत्तिमत्त्वे सति स्वानधिकरणसाध्यवन्निष्ठाभावप्रतियोगित्वेन साध्यव्यापकत्वं निरुच्य तत्प्रतियोगिकाभाव एव निवेश्यतामिति वाच्यम् तस्य लक्षणांतरत्वेप्युक्त
लक्षणस्यादुष्टत्वादिति भावः यत्समानाधिकरणा इत्यत्र हेत्वधिकरणत्वं विशिनष्टि। येनेत्यादिना तदधिकरणमिति तत्संबंधीत्यर्थः। तेन तादात्म्येनाधिकरणाप्रसि राम
द्धावपि तत्संबन्धेन सद्धेतौ नाव्याप्तिः अतथात्वेपीति प्रतियोग्यधिकरणवृत्तित्वविरहेपीत्यर्थः। यद्यपि प्रतियोगिसामानाधिकरण्यमवश्यं स्वविशिष्टहेत्वधिकरणाव ५

च्छेदेनाग्रे विवक्षणीयं तथा च हेतुतावच्छेदकसम्बंधेन हेत्वधिकरणानुक्तौ कालिकसम्बन्धेन धूमस्याधिकरणे महाकाले वर्तमानस्य प्रलयान्यत्वाद्यभावस्यापि यावदन्तर्गतत्वात्स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या वन्हिमान् धूमादित्यादावव्याप्तिः संभवति तथापि स्वविशिष्टहेत्वधिकरणेत्यादेरुक्तावनुक्तौ चोभयथैव अयमात्मा ज्ञानादित्यत्राव्याप्तिः वन्हिमान्धूमादित्यत्र स्वविशिष्टेत्याद्युक्तावेव तथेत्याशयेन प्रसिद्धोदाहरणं परित्यक्तं यत्तु महाकालस्यैव प्रलयान्यत्वाद्यभावविशिष्टहेत्वधिकरणत्वसंभवात् स्वविशिष्टेत्याद्युक्तावपि वन्हिमान् धूमादित्यादौ नाव्याप्तिः महाकालस्य हेतुताघटकसंयोगसंबन्धेन धूमाधिकरणत्वाभावेपि हेतुसम्बन्धित्वानपायात्। तादात्म्येन हेतोः संग्रहार्थं हेतुतावच्छेदकसम्बन्धेन यो हेतुसंबंधी तद्वृत्तियावदभावानामेव निवेशितत्वादिमतं। तत्तुच्छं संयोगमात्रेण धूमहेतोः प्रभामंडलादौ वन्हेर्व्यभिचारितया पर्वतादिनिरूपितसंयोगेनैव तस्य हेतुत्वात्तादृशसंयोगेन च धूमस्याधिकरणे पर्वतादौ प्रलयत्वादिस्वरूपस्य प्रलयान्यत्वाद्यभावस्य वैशिष्ट्याप्रसिद्धेरावश्यकत्वात् विभिन्नकालीनयोर्विषयतान्यसंबन्धसामान्येनैवाधाराधेयभावविरहादिति दिक्। ननु पृथिवीत्ववान् महाकालत्वात् महाकालकपालान्यतरत्वाद्वेत्यादावतिव्याप्तिः साधनसमानाधिकरणस्य महाकालान्यत्वाद्यभावस्यापि हेत्वधिकरणमहाकालाद्यवच्छेदेन कालिकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वादत आह। एकैवेति। दलांतरेपि प्रतियोगिसामानाधिकरण्यदलेपीत्यर्थः एकसंबन्धेन व्यापकत्वमन्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यं इत्येवं सम्बन्धभेदनिबन्धनः प्रोक्तातिव्याप्तिरूपो दोषः साध्यव्यापकताघटकसंबन्धेन साध्यप्रतियोगिसामानाधिकरण्यघटकसंबंधस्यैक्यविवक्षया निरसनीय इत्यर्थः। यत्संबन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्तदन्यप्रतियोगिताकः साध्यवन्निष्ठाभावीयतत्सम्बंधावच्छिन्नप्रतियोगितायाः सामानाधिकरण्यावच्छेदकान्यप्रतियोगिकोवायोभावस्तादृशसंबन्धेन प्रतियोगिनो यदधिकरणं तद्वृत्तित्वं विवक्षितमिति फलितोर्थः पृथिवीत्वाद्यभावप्रतियोगित्वं तु न कालिकसंबंधेन पृथिवीत्वादिव्यापकतावच्छेदकं निरुक्तपृथिव्यां व्यभिचारात्। किंतु समवायेनैव तेन च संबंधेन पृथिवीत्वाद्यभावस्य हेत्वधिकरणमहाकालावच्छेदेन प्रतियोगिसामानाधिकरण्याभावान्नोक्तातिव्याप्तिरिति भावः यत्तु येन संबंधेन व्यापकत्वं तेन संबंधेन प्रतियोगिसामानाधिकरण्योक्तावपि नित्यज्ञानं ईश्वरसविषयकत्वादित्यत्रातिव्याप्तिः साधनसमानाधिकरणस्येच्छाभिन्नत्वाद्यभावस्यापि साध्यव्यापकताघटकविषयितासंबंधेन यावद्धेत्वधिकरणे प्रतियोगिसमानाधिकरणत्वात् न च येन येन संबंधेन व्यापकत्वं तेन तेन संबंधेन प्रतियोगिसामानाधिकरण्यविवक्षणान्नोक्तदोषः तथा सति यावत्पदवैयर्थ्यापत्तेः विशेषणतासामान्येनैव साध्यवन्निरूपितविशेषणतयापि वाच्यत्वादेः साध्यव्यापकतया घटत्वादिना वाच्यत्वाद्यभावस्यैव तादृशसम्बंधेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहात् धूमवान् वन्हेरित्यादौ व्यभिचारिण्यतिव्याप्तिविरहात्। तन्मते विषयितासंबन्धेन व्यापकताया एवासत्वाद्विषयितासंबंधेन स्वावच्छिन्ना॰

जा०व्य धिकरणत्वाप्रसिद्धाःस्वावच्छिन्नानधिकरणसाध्यवन्निष्ठेत्यादिव्यापकतायास्तेनसम्बन्धेनासंभवात्। नचतेनसंबन्धेनस्वावच्छिन्नसम्बन्धित्वमेवव्यापकतायांनिवेशनीयंत्व
६ दुक्तातिप्रसंगभयेनैवतस्यानिवेशनीयत्वात्। नचतत्सम्बन्धावच्छिन्नायाःसाध्यवन्निष्ठाभावप्रतियोगितायास्सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वलक्षणंव्यापकत्वंवि
षयितासम्बन्धेनसुलभं साध्यवतिनित्यज्ञानेवस्तुमात्रस्यैवविषयितासम्बन्धेनसत्वेपिनित्यज्ञानान्यत्वविशिष्टघटादेर्विषयितासम्बन्धेनाभावस्यतत्रसत्वेबाधकाभावादिति
वाच्यं विषयितायावृत्त्यनियामकतयातत्संबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः यदपिमनस्त्ववत् अणुत्वादित्यत्रातिव्याप्तिः परमाणुत्वसमानाधिकरणस्यमनस्त्वाद्यभाव
स्यापिसाध्यव्यापकताघटकदिक्कृतविशेषणतयासर्वत्रैवपरमाणौप्रतियोगिसमानाधिकरणत्वादिति। तदपितुच्छं नित्यानामव्यावर्तकत्वाज्जन्यानामेवमूर्त्तानांदिगुपा
धितयापरमाणौदिक्कृतविशेषणतयाकस्याप्यसत्वात् तेनसंबन्धेनसाध्यव्यापकत्वविरहात्। अन्यथावस्तुमात्रस्यैवकालोपाधित्वसंभवात्तदपिजन्यमात्रस्यनस्यात् अत
एवप्रलयदशायांदिग्देशविभागोनास्तीत्यादिसिद्धांतःसंगच्छते अन्यथापरमाणूनांसत्वात्तदानीमपिदिग्विभागप्रसंगादितिदिक्। यदिचस्पंदोमहाकालत्वादित्यादावति
व्याप्तिःसाधनसमानाधिकरणस्यमहाकालान्यत्वाद्यभावस्यापिसाध्यव्यापकताघटककालिकसम्बन्धेनमहाकालेप्रतियोगिसमानाधिकरणत्वात् नचायंस्पंदइत्या
कारकयत्किंचिद्बोधव्यक्तेर्विषयतासम्बन्धेनैवस्पंदत्वव्यापकत्वात् यावदंतर्गतस्यतदभावस्यैवसाध्यव्यापकताघटकविषयतासम्बन्धेनहेत्वधिकरणमहाकालेप्रतियोगि
समानाधिकरणत्वाभावान्नातिव्याप्तिः नहितादृशबोधव्यक्तौकालिकसंबन्धेनापिस्पंदत्वव्यापकत्वंभाविभूतेषुस्पंदेषुव्यभिचारादितिवाच्यं विषयतायाःज्ञानसमानका
लीनतयातद्बुद्धिव्यक्त्यभावदशायामेवस्पंदत्ववतिविषयतासम्बन्धेनतत्तद्बुद्धिव्यक्त्यभावस्यसत्वाद्विषयतासम्बन्धेनायंस्पंदइत्याकारकजन्यबुद्धेःसाध्यव्यापकत्वा
संभवात् किंचव्यधिकरणधर्मावच्छिन्नाभावस्यासत्वेपिव्यधिकरणसम्बन्धावच्छिन्नवाच्यत्वाद्यभावमादायैवकेवलान्वयिसाध्यकस्थलेलक्षणसमन्वयात्प्रतियोग्यवृ
त्तिश्चेत्यादिमूलस्यतद्दूषकत्वानुपपत्तेः। नचसाध्यवन्निष्ठाभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वरूपव्यापकतायांव्यधिकरणधर्मावच्छिन्ना
भावमादायासंभववारकस्यसामानाधिकरण्येनेत्यस्यव्यर्थतायामेवतन्मूलग्रन्थस्यतात्पर्यमितिवाच्यम्। सामान्यधर्मेणविशेषाभावमादायव्यापकत्वस्याप्रसिद्धेर्वार
णार्थमेवसामानाधिकरण्यदलस्यव्यापकतायामवश्यंनिवेशनीयत्वादित्यांकंविभाव्यते तदासम्बन्धैक्यविवक्षयेतिग्रंथस्यसाध्यव्यापकत्वस्यतदवच्छेदकप्रतियोगि
त्वस्यप्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वस्यचैकसम्बन्धावच्छिन्नत्वविवक्षयेत्यर्थः। तथाचस्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्य राम
व्यापकतावच्छेदकप्रतियोगिताकायावंतोऽभावाःस्वप्रतियोगितावच्छेदकसम्बन्धेनप्रतियोगिसमानाधिकरणाइत्यर्थलाभात् यावदंतर्गतस्यसमवायादिसंबं ६

धेननित्यज्ञानत्वमनस्त्वसंदत्वाद्यभावस्यस्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेनयावद्धेत्वधिकरणेप्रतियोग्यसमानाधिकरणत्वात् नित्यज्ञानंईश्वरसविष
यकत्वात् मनस्त्ववत् अणुत्वात् संदोमहाकालत्वादित्यादौकुत्रापिनातिव्याप्तिः। नचैवंवाच्यत्वंज्ञेयत्वादित्यादावव्याप्तिः व्यधिकरणधर्मावच्छिन्नवाच्यत्वाद्यभावस्ये
वतत्रघटकतयातस्यप्रतियोगितावच्छेदकसंबन्धसत्वेमानाभावादितिवाच्यं स्वरूपसंबन्धेनघटत्वादिनावाच्यत्वनास्तीत्यादिप्रतीत्यनुरोधेनतादृशाभावस्यापि
प्रतियोगितावच्छेदकसंबंधस्वीकारात्। अन्यथाभूतलंसंयोगेनपटत्वावच्छिन्नघटवदित्येवंनिर्णयसत्वेपिभूतलेसंयोगेनपटत्वेनघटोनास्तीतिप्रत्ययप्रसंगात्नचै
वमपसिद्धांतः व्यधिकरणधर्मावच्छिन्नोपिचेदभावःप्रामाणिकस्तदासर्वैःसम्बन्धैस्तत्प्रतियोगिता अवच्छिद्यतामितिग्रंथकृतैवसामान्याभावेवक्ष्यमाणत्वात् के
चित्तुसम्बन्धैक्यविवक्षयेत्यस्यसाध्यवत्वंसाध्यव्यापकत्वंप्रतियोगित्वंप्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वंचैकेनसाध्यतावच्छेदकसम्बन्धेनवि
वक्षणीयमित्यर्थः। तथाचसाध्यतावच्छेदकसंबंधावच्छिन्नसाध्यव्यापकतावच्छेदकीभूततादृशसंबन्धावच्छिन्नप्रतियोगिताकायावन्तोऽभावाःसाध्यतावच्छेदकसं
बन्धेनप्रतियोगिसमानाधिकरणाइत्यर्थलाभान्नकुत्राप्यतिव्याप्तिः नचप्रतियोगितायासाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणंव्यर्थमितिवाच्यंतदनुक्तौवा
च्यत्वादिभेदमादायैवकेवलान्वय्यादौलक्षणसंभवेप्रतियोग्यवृत्तिश्चेत्यादिमूलेतन्निराकरणस्यासंगतत्वापत्तेः नचैवमपिसर्वत्रवाच्यत्वाद्यभावस्येत्यादिग्रंथविरो
धः वाच्यत्वादेःसंयोगादिसम्बन्धेनधूमाद्यव्यापकत्वादितिवाच्यं वाच्यत्वाद्यभावस्येत्यादिपरत्वात्। यत्रस्वरूपसम्बन्धेनसाध्यतातत्रवाच्यत्वाद्यभावमादायसंयो
गादिसंबंधेनसाध्यतायांचद्रव्याद्यभावमादायातिव्याप्तिपरतयैवतत्संगतेरित्याहुः तन्मन्दंमनोन्यत्वाद्यभावस्येत्याद्युक्तग्रंथविरोधात् भूतत्वमूर्तत्वोभयस्यसमवा
येनसाध्यतायामनोन्यत्वस्यतत्सम्बन्धेनसाध्यव्यापकत्वासंभवात् वृत्त्यनियामकसम्बन्धेनाधिकरणत्वस्यप्रतियोगित्वस्यचाप्रसिद्ध्यातेनसाध्यतायांधनीचैत्रत्वादि
त्यादिसद्धेतावव्याप्तिः तद्रूपान्यरूपरूपत्वादित्यादावतिव्याप्तेश्च साध्यताघटकसमवायेनसाध्यव्यापकतावच्छेदकप्रतियोगिताकानांव्यधिकरणधर्मावच्छिन्नगु
णत्वाद्यभावानांसर्वेषामेवस्वविशिष्टहेत्वधिकरणावच्छेदेनप्रतियोगिसमानाधिकरणत्वादिति यत्तुविशेषणसाध्यव्यापकत्वंतेनैवचप्रतियोगित्वप्रतियोगिसामाना
धिकरण्यंचसम्बन्धैक्यविवक्षेत्यस्यार्थमाह। तदपिनवाच्यत्वाद्यभावस्यात्मत्वाद्यभावस्येत्यादिग्रंथस्यालग्नकतापत्तेरुपेक्षितमिति। नन्वेतावताप्ययमात्माज्ञानादित्या
दावव्याप्तिरेवघटत्वादिनात्मत्वसामान्याभावस्यस्वविशिष्टस्यहेतोर्विषयतयाधिकरणेघटादौव्यापकताघटकसमवायेनप्रतियोगिसामानाधिकरण्याभावादलआह
दलान्तरेतिपश्चादुक्तेहेत्वधिकरणावच्छेदेनेत्यत्रहेत्वधिकरणदलेपीत्यर्थः। सम्बन्धैक्यविवक्षयेति हेतुसमानाधिकरणाइत्यत्रहेत्वधिकरणत्वंयेनसम्बन्धेनस्वविशि

गवा

विशेषणता

जा॰ व्या
७

ष्टहेत्वधिकरणावच्छेदेनेत्यत्र हेत्वधिकरणत्वं तेनैव सम्बन्धेनेति विवक्षयेत्यर्थः। इत्थं च दलांतरमपि साधु संगच्छत इति तु नव्याः यद्वा धूमवान्वन्हेरित्यत्रातिव्याप्तिः धूमसामा
न्याभावस्यापि हेत्वधिकरणावच्छेदेन स्वप्रतियोगित्वस्य कालिकसम्बन्धेनाश्रयीभूतवन्ह्यादेः समानाधिकरणत्वादत आह दलांतरेपीति प्रतियोगिसामानाधिकरण्य
मित्यत्र प्रतियोगिताश्रयदलेपीत्यर्थः। सम्बन्धभेदनिबन्धनो दोषः प्रकृतसाध्यव्यापकत्वस्यैकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यान्यसम्बं
धावच्छिन्नप्रतियोगिताश्रयीभूतवन्ह्यादेः सामानाधिकरण्यनिबंधनो दोषः सम्बन्धैक्यविवक्षया यत्सम्बन्धेन व्यापकतावच्छेदकत्वं प्रतियोगिसामानाधिकरण्यमि
त्यत्रापि तेन सम्बन्धेन प्रतियोगिताश्रयत्वविवक्षयेत्यर्थ इति संक्षेपः अत्र सम्बन्धैक्याविवक्षायां रूपसामान्याभाववान्पृथिवीत्वाज्जन्यपृथिवीत्वाद्वेत्यादिविरुद्धहेता
वप्यतिव्याप्तिः साधनसमानाधिकरणस्य पृथिव्यन्यत्वाद्यभावस्यापि हेत्वधिकरणपृथिव्यवच्छेदेन जन्यपृथिव्यवच्छेदेन वादिक्कृतविशेषणतया प्रतियोगिसमाना
धिकरणत्वात् मूर्तमात्रस्यैव दिगुपाधित्वोपगमात्। न च तस्यालस्यत्वेनीरूपमित्याकारकयत्किंचित्प्रमाव्यक्तेविषयतासंबन्धेन साध्यव्यापकत्वाद्यावदंतर्गतस्य
तदभावस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः तादृशबुद्धिव्यक्तेर्विभिन्नकालीनघटादौ केनापि सम्बन्धेनासत्वादिति वाच्यम्
विषयतायाज्ञानसमानकालीनतया तादृशबुद्ध्यभावदशायामेव रूपशून्ये गगनादौ विषयतासंबन्धेन तद्बुद्ध्यभावप्रतियोगित्वावच्छिन्नाभावसत्वात्तादृशज्ञानव्य॰
क्त्यभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात् स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठत्यादिव्यापकतायास्तद्बुद्धिव्यक्तौ सत्वेपि प्रतियोगिवैयधि
करण्याघटितव्यापकत्वस्य तद्बुद्धिव्यक्तावसत्वेनोक्तस्थलेऽतिव्याप्तेरावश्यकत्वादिति भ्रमं निराकुरुते रूपसामान्येत्यादिना पृथिवीत्वादिकमिति नित्यपृथिव्यादि
गुपाधित्वे मानाभावादादिपदं तेन जन्यपृथिवीत्वाद्युपग्रहः सद्धेतुप्रतिकूलविरोधं निरस्यति प्रलय इति महाप्रलय इत्यर्थः खण्डप्रलये तु पार्थिवपरमाणौ रूपमस्त्येव
अन्यथोत्तरसर्गे पार्थिवद्व्यणुकस्य रूपोत्पत्त्यर्थं परमाणौ पाकांतरकल्पनापत्तेरिति प्रांचः प्रलय इत्यस्य पाकेन रूपादेः प्रलयदशायामित्यर्थः। तेन महाप्रलयानभ्युपगमे
पि न क्षतिः उत्पत्तिकाले चेत्यत्र चकारेण निरुक्तप्रलयस्यानुकर्षणाच्चावयविन्यपि पाकदशायां तत्सत्वात् नग्रंथन्यूनतेत्यपरे ननु विरोधविरहेपि घटाद्यवच्छेदेन॰
व्यभिचारित्वात्कुतः सद्धेतुत्वमत आह उत्पत्तिरिति यद्यपि पाकेन श्यामादिरूपनाशकालेपि अवयविनि रूपसामान्याभावसत्वं तथापि पीलुपाकवादिमते तदसंभ
वात् अपच्यमानावयविन्यनुरोधाच्च उत्पत्तिकालमात्रानुसरणं तत्सत्वादिति रूपादिसामान्याभावसत्वादित्यर्थः प्रतियोगिवदिति प्रतियोगिन इवेत्यर्थः विरोधित्वं राम॰
एकदैकदेशावृत्तित्वं मानाभावादिति प्रलयाद्यवच्छेदेन परमाण्वादौ रूपादिसामान्याभावे तु योग्यसन्निकर्षाभावात्प्रत्यक्षासंभवेप्यनुमानादिकमानमस्तीत्याशयः ७

यत्तु घटादावुत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य प्रत्यक्षमेव संभवति तदानीं चक्षुःसंयुक्तविशेषणतायास्तत्रासत्त्वेपि द्रव्यसमवेतवृत्त्यभावप्रत्यक्षे हेतोश्चक्षुःसंयु
क्तसमवेतविशेषणतायाः सत्त्वेन संनिकर्षसंभवादिति। तत्तुच्छं चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचाक्षुषापत्त्या चक्षुःयोग्यसंयुक्तसमवेतविशेषणताया
एव अभावग्राहकत्वेन द्रव्यान्यद्रव्यसमवेतवृत्त्यभावचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वात् अन्यथा त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारापत्तेः वस्तुतः स्वोत्पत्तेः पूर्वं चक्षुः
संयुक्तसमवेतस्य घटादेरसत्त्वात्तद्विशेषणताया अपि तदानीमसत्त्वात्तदुक्तक्रमेण हेतुत्वेन नास्तीति ध्येयम्। अतएवेति ध्वंसप्रागभावयोरत्यंताभावविरोधित्वे मानाभावा
देवेत्यर्थः रक्तिमध्वंसप्रागभावयोः सत्त्वमावेदयितुमंतरा पदं रक्तं रूपमिति न च गुणेषु क्लादयः पुंसीत्यनुशासनोक्त रक्तो नास्तीत्येव प्रयोगो युक्त इति वाच्यं वस्त्वंतरविशेषणता
नापन्नस्यैव शुक्लादिशब्दस्य पुंस्त्वानुशासनात् अतएव शुक्लं रूपमिति प्रयोगः समासे मणिकृतैव वक्ष्यत इति ध्येयं एवं रक्तं रूपं नास्तीति प्रत्ययः पूर्वं स्यादि पूर्वं रक्तस्य ध्वंस
र वतिउत्तरं रक्तस्य प्रागभाववतिइदानीं रक्तेपीत्यर्थः नच रक्ततादशायां वर्तमानस्यापि रक्तांतरध्वंसादेस्तदानीं रक्तत्वावच्छिन्नप्रतियोगिताकत्वविरहान्न तादृशप्रत्ययापत्ति
स्यान्याप्यवृत्तित्वादिति वाच्यं ध्वंसादिप्रतियोगित्वस्य किंचिद्धर्मानवच्छेद्यत्वात् तत्तद्रक्तध्वंसप्रागभावादिषु रक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनामपेक्ष्य रक्त
दृश्या त्वावच्छिन्नात्यन्ताभावसंबंधस्यैवांतराश्यामादिषु कल्पनाया लघुत्वाच्च। न च यावंति रक्तरूपाणि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकाभावकू
यां टैरेव रक्तं रूपं नास्तीति प्रत्ययः क्रियते प्रकृते च विद्यमानरूपप्रतियोगिकस्य तादृशाभावस्यासत्त्वान्न तथा प्रतीतिरिति वाच्यम् तथा सत्यंतराश्यामे रक्तं रूपं नास्तीत्याकौ
रकनिर्णयेपि तत्र रक्तं रूपमस्तीति प्रत्ययापत्तेः विरोधिनः सामान्याभावस्यानिश्चयात् विशेषाभावकूटनिर्णयस्याप्रतिबंधकत्वात् अन्यथा सामान्याभाव एव न सि
द्ध्येदिति भावः अंतरा च रक्त प्रतियोगितासंबंधेन रूपत्व मात्रावच्छिन्नप्रकारताकः संसर्गाभावविशेष्यकः प्रत्ययो रूपत्वावच्छिन्नप्रकारताकबुद्धेर्विरोधीति रूपत्वं प्रति
योगितावच्छेदकमेव नेति श्यामतादशायां रूपत्वावच्छिन्नाभाव एव रूपं नास्तीति प्रतीतेर्विषयः किमनुरोधेन रूपध्वंसादिमति तदत्यंताभावसिद्धिरित्याहुः तन्मंद
अंतराश्यामे समवायेन रक्तं रूपं नास्तीति प्रतीतेः प्रामाण्यानुरोधेनैव ध्वंसात्यंताभावयोर्न विरोधः अन्यथा समवायावच्छिन्नप्रतियोगिताकध्वंसाद्यप्रसिद्ध्या तत्प्र
तीतेर्भ्रमत्वापत्तेरिति तु परमार्थः तत्सामानाधिकरण्यं चेति। प्रतियोगिसामानाधिकरण्यं चेत्यर्थः स्वविशिष्टेति स्वपदं लक्षणघटकतत्तदभावव्यक्तिपरं तथा च तत्तद
भावाश्रयीभूतपक्षहेतुताघटकसम्बन्धेन हेतुतावच्छेदकधर्मावच्छिन्नाधिकरणं तदवच्छेदेन तत्तदभावे स्वस्वप्रतियोगिसामानाधिकरण्यं ग्राह्यमित्यर्थः तेन हेतु
समानाधिकरणस्य घटत्वादिना वह्न्याद्यभावस्यापि कालिकसम्बन्धेन धूमाद्यधिकरणस्पंदादौ व्यापकताघटकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्या

प्रमा

जा॰व्या भावेपिवह्निमान्धूमादित्यादौनाव्याप्तिः नवाद्रव्यंविशिष्टसत्त्वादित्यादौघटत्वादिनाद्रव्यत्वाद्यभावस्यहेत्वधिकरणाद्यवच्छेदेनप्रतियोग्यसमानाधिकरणत्वेपिक्षतिः
८ गुणादीनांविशिष्टसत्तानधिकरणत्वात्। यद्यपिव्याप्यवृत्तेरवच्छेदकत्वेमानाभावाद्द्रव्यत्वाद्यभावनिष्ठंयत्प्रतियोगिसामानाधिकरण्यंतदवच्छेदकत्वेनहेत्वधि
करणस्यत्वसंभवः कथितातिव्याप्तितादवस्थ्यंच नचस्वविशिष्टहेत्वधिकरणताव्यापकीभूतप्रतियोग्यधिकरणतावद्वृत्तित्वंवाच्यं स्वविशिष्टपदवैयर्थ्यापत्तेःप्रति
योग्यकरणीभूतस्वविशिष्टयावद्धेत्वधिकरणवृत्तित्वस्योक्तौद्रव्यत्वघटत्वादित्यादावव्याप्तिः यावद्धेत्वधिकरणाप्रसिद्धेः तथापियावतोहेतुमद्वृत्ति धर्माः हेत्वधि
करणत्वानिवायावंतितत्प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्यविवक्षितत्वाद्दोषः एकमात्रवृत्तिहेतोरपितत्तत्त्वेनवृत्तित्वविशिष्टस्यबहून्यधिकरणानिसं
तीतिनतत्राव्याप्तिः नचप्रतियोग्यधिकरणवृत्तित्वविशिष्टयावद्धेत्वधिकरणताकत्वमात्रसम्यक्स्वविशिष्टस्यहेतुसमानाधिकरणाद्यस्यस्यचैवैयर्थ्यापत्तेरितिभावः।
प्रागुक्तमपिस्वविशिष्टपदंहेत्वधिकरणावच्छेदेनेत्यस्यप्रवेशएवार्थवद्भवतिइत्यतः पश्चादुक्तस्यापितस्यप्रथमंप्रयोजनमाह। तेनेति गोत्वादिनागवाद्यभावस्यत
द्वृत्तिकालेवृत्तावपियदागोत्वंतदागौरित्यादौनातिप्रसंगइतियोजना इदमुपलक्षणं तत्तद्यौगोलकान्यत्वाद्यभावस्यापिप्रतियोगिसमानाधिकरणत्वाद्धूमवान्वह्नेरि
त्यादावतिप्रसंगोद्रष्टव्यः गवाद्यभावस्यप्रतियोग्यधिकरणेदैशिकसंबन्धेनापिवृत्तित्वमुपपादयितुमाह। गवाद्यनधिकरणेति। इदानींचत्वरेगौर्नास्तीतिप्रत्ययात्। गो
मत्यपिकालेकालिकसम्बन्धावच्छिन्नगवाद्यभावस्यगव्यनधिकरणचत्वराद्यवच्छेदेनवृत्तौनविरोधः नचैतत्प्रत्ययस्यचत्वरएवैतत्कालावच्छेदेनगवात्यन्ताभावो
विषयइतिवाच्यं देशवृत्तौकालस्येवकालवृत्तौदेशावच्छेदकत्वानुभवादेकशेषस्यकर्तुमशक्यत्वात् इदानींगगनेगौर्नास्तीतिप्रतीतेर्गवाद्यभावस्यैतत्कालावच्छेदेनग
गनवृत्तित्वावगाहितायांभ्रमत्वापत्तेश्चगवाद्यभावस्यगगनादौसावेदित्वेनव्याप्यवृत्तितयाकालावच्छेद्यत्वासंभवादितिभावः तद्वृत्तीति गवादिमतीत्यर्थः कालेजन्य
कालेननुचरमध्वंसात्मकस्यप्रलयात्यन्ताभावाभावस्यापियावदन्तर्गतत्वात्तस्यसृष्टिकालेप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरत आह महाकालेवेति।
तथाचतस्यापिमहाकालेप्रतियोगिसामानाधिकरण्यात्तस्यकालिकसंबन्धेनजगदाधारत्वादितिभावः ननुगोत्वादिजातेःप्रलयेकालिकसंबंधेनसत्वेप्रमाणाभावाद्य
दागोत्वंतदागौरितिसद्धेतुरेवेतियदिब्रूयात्तदाप्याह यत्रकालत्वमिति उक्तविवक्षानादरेघटादिसाधारणरूपेणगोःसाध्यतायामतिव्याप्तिरित्याशयेनसाध्यांतरमाह
जन्यद्रव्यमिति द्रव्यस्यसाध्यतायांकालत्वसद्धेतुरेवप्रलयेकालिकसंबंधेनपरमाण्वादेः सत्वात् कार्यद्रव्यानधिकरणीभूतत्वेसतिद्रव्यवत्तेनैवधर्मिग्राहकप्रमाणे राम॰
नतत्सिद्धेरतोव्यभिचारित्वसंपत्तयेजन्यपदं ननुमहाप्रलयानंगीकारेप्रागुक्तहेतुद्वयमेवलक्ष्यखंडप्रलयेपिब्रह्मांडांतरेजन्यद्रव्यसत्वात्॥ अतःसाध्यांतरमाह॥ ८

त्वा

प्रलयावृत्तिर्वेति खंडप्रलयावृत्तिर्वेत्यर्थः। यद्यपि प्रतियोगिनो यदधिकरणं तद्वृत्तित्वस्य दैशिकसम्बन्धेन विवक्षायामपि यदा गोत्वं तदा गौरित्यादावतिव्याप्तिवारणं संभ
वति प्रलयाद्यवृत्तित्वावच्छिन्नाभावस्य प्रतियोग्यधिकरणे महाकालादौ दैशिकविशेषणतासम्बन्धेन वृत्तित्वविरहात्। नच द्रव्यं महाकालत्वादित्यादावव्याप्तिः का
लिकसंबंधेन महाकालनिष्ठस्य द्रव्यत्वाद्यभावस्य स्वप्रतियोग्यधिकरणे दैशिकविशेषणतया वृत्त्यभावादिति वाच्यं हेतुसमानाधिकरणत्वस्यापि तादृशविशेषणतया विशे
षणीयत्वात् तथापि रूपभिन्नं गुणत्वादित्यादौ साधनसमानाधिकरणस्य रूपान्यत्वाद्यभावस्य रूपभिन्नत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्य च रूपत्वादिस्वरूपतया
दैशिकविशेषणतासंबंधेन वृत्तित्वविरहेण यावदन्तर्गतत्वात् घटत्वादिना रूपभिन्नत्वाद्यभावस्य च सर्वस्यैव तादृशाभावस्य महाकालादौ स्वप्रतियोगिसमानाधि
करणत्वादतिव्याप्तिरतः स्वविशिष्टहेत्वधिकरणेत्यादिविवक्षानुसरणमिति वदंति वस्तुतो दैशिकविशेषणताघटितस्य लक्षणांतरत्वादेकेनापरस्यान्यथाकर्तुमशक्य
त्वादुक्तलक्षणे नवैयर्थ्यमिति परमार्थः। यत्तु हेत्वधिकरणे विशेषणतया वर्तमानानां निरुक्तयावदभावानां प्रतियोगिवृत्तित्वमेव विशेषणतासम्बन्धेनोचितं प्रति
योग्यधिकरणवृत्तित्वप्रवेशे गौरवात् सर्वत्र व्यभिचारीस्थलान्यत्वाद्यभावमादायातिव्याप्त्यभावादिति तत्तुच्छं स्ववृत्तित्वविशिष्टानां केवलान्वयिधर्माणां म
त्यताभावस्य स्वप्रतियोग्यवृत्तित्वेनासंभवापत्तेः न हि वाच्यत्वादिवृत्तित्वविशिष्टानां वाच्यत्वादीनामभावो वाच्यत्वादिरूपप्रतियोगिवृत्तिरिति दिक्। प्राचां मते संयो
गसामान्याभावसाध्यकमेयत्वं द्रव्यएव व्यभिचारीत्यतः क्वापि यदप्रतियोगिवैयधिकरण्यघटितमेव साध्यव्यापकत्वमत्र प्रवेशितं यथा सन्निवेशे वैयर्थ्यविरहाद
तस्तदवच्छेदकत्वस्य संयोगाभावनिष्ठप्रतियोगित्वे व्यक्ततेरित्याशयेन संयोगात्मकाभावस्याभिधानं तदघटितसाध्यव्यापकतायाः प्रवेशे तु गगनत्वादिविशि
ष्टवाच्यत्वाद्यभावस्य गगनत्ववाच्यत्वोभयत्वावच्छिन्नाभावादेर्यावदन्तर्गत्वात्तस्य च हेत्वधिकरणीभूतगगनावच्छेदेन प्रतियोग्यसमानाधिकरणाद्व्याप्ति १७
रतः स्वविशिष्टपदं एतदभिप्रायेणैव संयोगाद्यात्मकाभावेऽस्य त्रादिपदमुपात्तं वस्तुतो सत्तावान् द्रव्यत्वात् गुणत्ववान् रूपत्वात् इत्यादौ कालेजन्यरूपे च हेतुस
मानाधिकरणस्य सत्ताभावस्य गुणत्वसामान्याभावस्य च केनापि संबंधेनात्मगगनादौ नित्यरूपे चावृत्तित्वाद्धेत्वधिकरणावच्छेदेन तस्यैव यावदन्तर्गतस्य प्रति
योगिसामानाधिकरण्यविरहादव्याप्तिः स्यादतः स्वविशिष्टपदं न स्यादितिदिक्। ननु धूमाद्यभावनिष्ठाजलादिवृत्तित्वविशिष्टगोत्वाभावस्याभावो धूमाभावस्य
वाभावप्रतियोगिकस्याभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात् तथा च धूमादौ साध्येवन्ह्यादिहेतावतिव्याप्तिर्धूमाद्यभावस्य हेत्वधिकरणावच्छेदे
न गोत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वादतआह जलावृत्तीति नच तादृशाभावस्य धूमाभावस्वरूपत्वेपि जलादेर्नतादृशाभावत्वावच्छिन्नाधिकरण

स्यच

जा॰व्या त्वे किंतुधूमाभावत्वावच्छिन्नाधिकरणत्वमेवेतिनप्रत्ययातिप्रसंगइतिवाच्यंएवंसत्यभावमात्रस्यैवप्रायेणाभेदप्रसंगात् उक्तक्रमेणैवातिप्रसंगवारणसंभवादिति
९ भावः ननुतथापिधूमावान्वन्हेरित्यादावतिव्याप्तिः समनियताभावानामैक्याद्धूमाभावस्यवन्हिधूमोभयाभावाद्भिन्नस्यायोगोलकान्यत्वाभावस्यायोगोलकभेद
त्वादिनाभेदसामान्याभावाद्भिन्नस्यहेत्वधिकरणावच्छेदेनैववन्ह्यादिभेदाद्यात्मकेप्रतियोगिसामानाधिकरण्यादितिचेदत्राहुः यावत्पदस्यफलतः प्रतियोगिताविशेष
णत्वेनसाध्यव्यापकतावच्छेदकीभूतयद्यत्प्रतियोगिताकोभावस्तत्स्यस्वविशिष्टहेत्वधिकरणावच्छेदेनतत्तत्प्रतियोगिताश्रयसामानाधिकरण्यंविवक्षितं तथाचधूमादि
सामान्याभावस्यधूमादिनिष्ठतादृशप्रतियोगिताकस्यधूमादिनिष्ठप्रतियोगिताश्रयेणधूमादिनाहेत्वधिकरणावच्छेदेनप्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः
नचयत्समानाधिकरणाइत्यस्यवैयर्थ्यं आत्मत्वसामान्याभावीयप्रतियोगितायाअपिसाध्यव्यापकतावच्छेदकतयातत्प्रतियोगिताकस्यात्मत्वसामान्याभावस्यतादृ
शप्रतियोगिताश्रयसामानाधिकरण्यविरहादयमात्माभानादित्यादावव्याप्तिवारकत्वात् जलादिवृत्तित्वविशिष्टेत्यादिग्रंथस्तुवस्तुगतिमनुरुध्यैवोक्तस्तेनतादृशाभाव
स्यधूमाभावस्वरूपत्वेपितस्यहेत्वधिकरणावच्छेदेनसाध्यव्यापकतावच्छेदकीभूतधूमनिष्ठप्रतियोगिताव्यक्त्याश्रयसामानाधिकरण्यविरहादेवातिव्याप्त्यसंभवेपि
नक्षतिः।नचधूमत्वेनधूमाभावस्यधूमनिष्ठंयत्प्रतियोगित्वंतदेवधूमत्वेनप्रमेयसामान्याभावस्यप्रमेयसामान्यनिष्ठंलाघवान्नतुतद्भिन्नंप्रतियोगित्वांतरंगौरवादित्युक्त
विवक्षयाप्यप्रतीकारइतिवाच्यम्।स्वरूपसंबन्धात्मिकायाःप्रतियोगितायाःसामान्याभावस्थलेप्रतियोगिभेदेनैवभिन्नत्वादितिसांप्रदायिकाः वस्तुतःसाध्यव्यापक
तावच्छेदिकायाःस्वन्यूनवृत्तिधर्मानवच्छिन्नायायादृशप्रतियोगितायानिरूपकोभावस्तत्स्यस्वविशिष्टहेत्वधिकरणावच्छेदेनतादृशप्रतियोगिताश्रयसामानाधि
करण्यमेववक्तव्यं तथाचधूमादिसामान्याभावस्यधूमत्वादिनाप्रमेयसामान्याभावानतिरेकेपितदीयंप्रमेयसामान्यनिष्ठंप्रतियोगित्वंस्वन्यूनवृत्तिनैवधूमत्वधर्मेणा
वच्छिन्नमतोनतादृशप्रतियोगिताश्रयसामानाधिकरण्यमादायातिप्रसंगइतियुक्तमुत्पश्यामः यत्तुसमनियताभावानामैक्यमतेधूमवान्वन्हेरित्यादावतिव्याप्तिवारणा
र्थं येनयेनसंबन्धेनव्यापकत्वंतैस्तैःप्रत्येकंप्रतियोगिसामानाधिकरण्यंविवक्षितं तथाचव्यभिचारिमात्रएवयत्राधिकरणेव्यभिचारस्तादृशान्यत्वस्यस्वात्मकस्वरूपसं
बंधेनापिसाध्यव्यापकत्वात्तदभावस्यचहेत्वधिकरणावच्छेदेनतादृशान्यत्वनिरूपि तस्वरूपसंबंधेनप्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः अतएवविषयि
तासंबंधस्यव्यापकताघटकत्वेपिनित्यज्ञानंनित्यसविषयकत्वादित्यादौनातिव्याप्तिः नित्यज्ञानत्वाद्यभावस्यव्यापकताघटकीभूतसमवायसंबन्धेनप्रतियोग्यसमानाधि राम
करणत्वादितिमतं तत्तुच्छंघटत्वादिनावाच्यत्वाद्यभावस्यैवघटत्वादिनायः पिण्डान्यत्वाद्यभावरूपतयातस्यचव्यापकताघटकायः पिण्डान्यत्वनिरूपितस्वरूपसम्बन्धे ९

नयावद्धेत्वधिकरणेप्रतियोगिसामानाधिकरण्यविरहाद्देवधूमवान्वन्हेरित्यादावतिव्याप्तिविरहाद्यावत्पदस्यस्वविशिष्टेत्यस्ययत्समानाधिकरणेत्यस्यचव्यर्थतापातादिति दिक् ननुव्यधिकरणधर्मावच्छिन्नाभावासत्वेपिसर्वत्रसद्धेतौघटत्वादिविशिष्टवाच्यत्वाद्यभावगगनवाच्यत्वोभयाभाववासमादायप्रोक्तलक्षणसंभवात्प्रतियोग्यवृत्तिश्चेतिमूलावतारानुपपत्तिः नचवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनव्यापकतावच्छेदकीभूतप्रतियोगितायाविशेषणीयत्वान्नैवमितिवाच्यं व्यभिचारावारकत्वेनतादृशविशेषणस्यव्यर्थत्वात् अन्यथाव्यधिकरणधर्मावच्छिन्नाभावसमानकालीनत्वेनापिहेतुविशिष्य्यैवग्रंथावतरणंकुतोनसमर्थयेदितिलक्षणांतरमाह यत्समानाधिकरणानामिति। वन्हिमान्धूमात्सत्तावान्द्रव्यत्वादित्यादावव्याप्तिः साध्यव्यापकप्रतियोगिकानांजलत्वविशिष्टद्रव्यत्वाभावगुणत्वविशिष्टसत्वाद्यभावनांस्वविशिष्टहेत्वधिकरणावच्छेदेनप्रतियोगितावच्छेदकीभूतजलत्वविशिष्टद्रव्यत्वत्वावच्छिन्नसामानाधिकरण्याभावात् तदुक्तं रूपावच्छिन्नेति तथाचजलत्वविशिष्टद्रव्यत्वत्वादेःसाध्यव्यापकतानवच्छेदकत्वाद्दोषः यत्तुसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्यघटत्वेनवन्ह्यभावस्यचयावद्धेत्वधिकरणेघटत्वावच्छिन्नसामानाधिकरण्याभावाद्व्यापकतावच्छेदकरूपावच्छिन्नेतितदत्यन्तमसत् घटत्वेनवन्ह्यभावस्यैववन्हित्वेनघटाभावतयातस्यापियावद्धेतुमतिस्वप्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्नसमानाधिकरणत्वात् ननुसमवायित्वस्यवाच्यत्वव्यापकतानवच्छेदकत्वात्तदवच्छिन्नस्यवाच्यत्वाद्यभावस्यमूलोक्तस्यैवतलक्षणाघटकत्वादाह। ज्ञेयत्वत्वादिनेति। शून्यमित्यादि येनसम्बन्धेनहेतुस्तेनसंबंधेनहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्तित्वमभावेग्राह्यं तेनायमात्मा ज्ञानात् घटान्यत्वविशिष्टआत्मघटसंयोगादित्यादावात्मत्वसामान्याभावस्यातथात्वेपिनाव्याप्तिः एवंयेनसम्बन्धेनव्यापकतातत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यस्वप्रतियोगितावच्छेदकसंबन्धेनप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यंबोध्यं अतोनव्यधिकरणधर्मावच्छिन्नाभावासत्वेपिव्यधिकरणसंबन्धावच्छिन्नवाच्यत्वाभावमादायलक्षणसंभवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रंथावतारानुपपत्तिः नवाजलत्वादेः समवायेनसाध्यतायांमहाकालत्वादित्यादावतिव्याप्तिः प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यंस्वविशिष्टहेत्वधिकरणावच्छेदेनबोध्यं तेनद्रव्यंसत्वादित्यादौद्रव्यत्वाद्यभावस्यकालेहेतुमतिप्रतियोगिसामानाधिकरण्येपिनातिव्याप्तिः इदंत्ववधातव्यं साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वरूपमेवव्यापकतावच्छेदकत्वमत्रपूर्वत्रचनिवेश्यंनतुप्रतियोगिवैयधिकरण्यघटितं तथासतिव्यधिकरणधर्मावच्छिन्नाभावासत्वेपिसर्वंप्रमेयमित्याकारकपक्तिविजन्यबुद्धिविषयत्वसामान्याभावमादायैवसर्वत्रलक्षणसमन्वयात्प्रतियोग्यवृत्तिश्चेत्यादिग्रंथावतारानुपपत्तिः जन्यज्ञानव्यक्तिविषयत्वस्यतादृशबुद्धिदशायामेवसत्वेनतदसत्वदशायामेवतादृशज्ञानविष

जा॰व्या॰ यत्वाभावस्यहेतुसमानाधिकरणत्वात् एवंचात्रस्वविशिष्टपदंनकपिसंयोगात्मकाभावंगगनत्वादिविशिष्टवाच्यत्वाभावंवादायकपिसंयोगाभाववान्प्रमेयत्वादित्या
१० दावव्याप्तिवारकंकपिसंयोगाभाववत्वादेरुक्तव्यापकतानवच्छेदकत्वात् किंतुहेतुमतिकालेवर्तमानस्यसत्वसामान्याभावस्यापिनिरुक्तरूपशालित्वात्तस्यचात्मादा
वसत्वेनयावद्धेत्वधिकरणेप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविरहात्सत्तावान्द्रव्यत्वादित्यादावव्याप्तिवारकमेवस्वविशिष्टपदं नचसाध्यतावच्छे
दकसम्बन्धेनसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकोयत्किंचिदभावोयद्धेत्वधिकरणावच्छेदेनस्वावच्छेदकसंबंधेनप्रतियोगितावच्छेदकावच्छिन्नसमा
नाधिकरणस्तत्वमित्येवसम्यक्वाच्यत्वत्वादिनाघटाभावमादायैववाच्यंज्ञेयत्वादित्यादौलक्षणसमन्वयादितिवाच्यं स्वरूपसंबंधावच्छिन्नप्रमेयत्वावच्छिन्ना
भावाप्रसिद्ध्याप्रमेयवान्ज्ञेयत्वादित्यादावव्याप्तिःगुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याप्रमेयवन्हिमान्धूमादित्यादावव्याप्तिः वृत्यनियामकसंबन्धस्यप्रतियो
गितानवच्छेदकतयागोमी चैत्रत्वादित्यादौस्वामित्वादिसंबंधेनगवादेःसाध्यतायामव्याप्तिश्चेतिदिक् ननुवन्हित्वेनधूमवद्वृत्तिसामान्याभावोधूमीयसंयोगसंबं
धेनद्रव्यसामान्याभावोवाधूमाभावएवतथायोगोलकभेदतदभावान्यतरत्वेनायोगोलकावृत्तेरभावोऽयोगोलकान्यत्वस्वरूपसम्बन्धेनभेदसामान्याभावोवाऽयोगो
लकभेदाभावएवसमनियताभावानामैक्यात् तथाचधूमाद्यभावस्यप्रतियोगितावच्छेदकंवन्हित्वादिकंतदवच्छिन्नसमयावद्धेत्वधिकरणेधूमाद्यभावस्यप्रति
योगितावच्छेदकावच्छिन्नसामानाधिकरण्यात् धूमवान्वन्हेरित्यादावतिव्याप्तिः सामान्यधर्मेणविशेषाभावाभ्युपगमेतुसुतरां तथाचधूमत्वेनधूमाद्यभावाना
मेवप्रमेयत्वादिनाधूमाद्यभावतयानस्यप्रतियोगितावच्छेदकीभूतप्रमेयत्वावच्छिन्नसामानाधिकरण्यादितिचेत् अत्रापियावत्त्वस्यफलतःप्रतियोगित्वस्यविशे
षणतयासाध्यव्यापकतावच्छेदकरूपावच्छिन्नयद्यत्प्रतियोगिताकोयत्समानाधिकरणोऽभावःस्वविशिष्टहेत्वधिकरणावच्छेदेनतत्तत्प्रतियोगितावच्छेदकाव॰
च्छिन्नसमानाधिकरणस्तत्वमितिपर्यवसितार्थः तथाचधूमादिनिष्ठतादृशधूमत्वावच्छिन्नप्रतियोगिताकाभावस्यधूमादिनिष्ठयत्प्रतियोगित्वंतदवच्छेदकीभू
तधूमत्वावच्छिन्नेनसार्द्धंहेत्वधिकरणावच्छेदेनसामानाधिकरण्यविरहान्नातिव्याप्तिरितिसांप्रदायिकाः वस्तुतोऽत्रापिसाध्यव्यापकतावच्छेदकरूपावच्छिन्नया
स्वन्यूनवृत्तिधर्मानवच्छिन्नयादृशप्रतियोगितायानिरूपकोभावस्तादृशप्रतियोगितायाः यदवच्छेदकंतदवच्छिन्नेनसामानाधिकरण्यंवक्तव्यं धूमत्वादिनाधूमाद्य
भावस्तुनप्रमेयत्वादिनाधूमाद्यभावः सामान्यधर्मेणविशेषाभावानभ्युपगमात् तदभ्युपगमेतुयादृशप्रतियोगिताकाभावेप्रतियोगितावच्छेदकावच्छिन्नवृत्ति राम॰
त्वजगद्वृत्तिभिन्नत्वस्यचद्वयोर्व्यतिरेकःसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानांतादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यंना १०

प्यमतो न कश्चिद्दोष इति ध्येयं चक्रवर्तिलक्षणान्याह । केचित्त्विति । अनवच्छेदकमिति यत्साध्यतावच्छेदकमिति परेणान्वितं घटत्वादिना वन्ह्यभावमादाय वन्हिमा
न्धूमादित्यादौ लक्षणसंगतिः व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव प्रतियोगितावच्छेदकं साध्यतावच्छेदकमतो नातिव्याप्तिः कपिसंयोगी एत
द्वृक्षत्वादित्यादावव्याप्तिवारणार्थं । व्याप्यवृत्तिरिति वन्हित्वादिना घटाभावमादायाव्याप्तिरतः साध्येति अत्र च प्रतियोगितासाध्यतावच्छेदकसंबंधेन ग्राह्या तेन समवा
यादिसम्बन्धेन वन्ह्याद्यभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकत्वेपि वन्हित्वादेर्नासंभवः प्रतियोगिवैयधिकरण्यप्रवेशे वाच्ये द्रव्यत्वादित्यादावव्याप्तिः प्र
तियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरतस्तत्परित्यागः व्याप्यवृत्तित्वं निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वं हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामा
नाधिकरण्येनानवच्छेदकं घटाभावव्यक्तित्वं तत्त्वं वा एवं चैतल्लाभार्थ मेव हेतुसमानाधिकरणस्येत्युक्तं । ननु स्वातंत्र्येण तद्विशेषणं वैयर्थ्यान् यत्किंचित्त्वनिवेशाच्च संयो
गाभावस्य हेत्वधिकरणीभूतद्रव्यनिष्ठाभावप्रतियोगित्वेपि संयोगिसत्वादित्यादौ नातिव्याप्तिः । ननु समनियताभावानामैक्यात् घटत्वेन वन्ह्यभावस्यैव वन्हित्वेन घटाभा
वतया हेतुसमानाधिकरणस्यैव तादृशसाध्यप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकं वन्हित्वादिकमित्यव्याप्तिः अतः समनियताभावैक्यमते निरुक्तिमाह । हेतुस
मानाधिकरणस्येति व्याप्यवृत्तेरभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकमिति योजना । नन्वत्रापि हेतुसमानाधिकरणस्यैव वन्हित्वे
न वन्हिधूमोभयाभावस्य वन्हित्वेन पर्वतावृत्तेरभावस्य च प्रतियोगितायाः समानाधिकरणं सदेव वन्हित्वमवच्छेदकमित्यव्याप्तिः तादृशप्रतियोगितायाः अन्यूनवृत्तित्वे
सति यदवच्छेदकं तदन्यत्वोक्तावपि तथा पर्वतवन्हित्वेन तार्णतार्णेतरवन्ह्युभयं नास्तीति प्रतीतिसिद्धस्यैव तादृशाभावस्य प्रतियोगितावच्छेदकत्वाद्वन्हित्वस्य नेच तादृ
शाभावप्रतियोगितावच्छेदकत्वं वन्हित्वमात्रे पर्याप्तं । किंतु तार्णतार्णोभयत्वेपि । अन्यथा तादृशप्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्नवति पर्वतादौ तादृशाभा
वासत्वप्रसंग इति वाच्यं सोऽयमते प्रतियोगितावच्छेदकधर्मावच्छिन्नवत्तामात्रस्याभावविरोधित्वात् अन्यथा घटवति घटत्वेन पटाभावस्यापलापापत्तेः किंतु प्रती
तिबलाद्व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वसिद्धौ सत्यां प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेनैव सार्द्धमनापत्त्याऽभावस्य विरो
धित्वं वाच्यं तदेतद्वन्हिमति वन्हित्वादिना तार्णतार्णोभयाभावादिसत्वेपि न क्षतिकरं । अत एव च द्रव्यत्वेन वन्हिर्नास्ति वन्हित्वेन तद्वन्हिर्नास्तीति प्रतीत्या सामान्यधर्मे
णाविशेषाभावोऽभ्युपेयते । न च तत्र वन्हित्वस्यैव प्रतियोगितावच्छेदकत्वं भासते द्रव्यत्वस्य तु वैशिष्ट्यमात्रे विषय इति वाच्यं वन्हिमानयमित्येवं निर्णयसत्वेपि द्रव्यत्वेन
वन्हिर्नास्तीति प्रत्ययात् । द्रव्यत्वस्यैवावच्छेदकतया भानात् । अन्यथा वन्हित्वावच्छिन्नवन्हिनिष्ठप्रतियोगिताकत्वेन वन्ह्यभावबुद्धिं प्रति वन्हित्वेन वन्हिविशिष्टनि

जा॰व्य श्चयस्यैवविरोधित्वात्तादृशप्रतीत्यसंभवापत्तेः। अस्माकंतुद्रव्यत्वावच्छिन्नवन्हिनिष्ठप्रतियोगिताकत्वेनवन्ह्यभावबुद्धिंप्रतिद्रव्यत्वेनवन्हिविशिष्टनिश्चयस्यैवविरो
११ धित्वात्तदसत्वादेवतादृशाभावप्रतीतिसंभवात् इत्यतोलक्षणांतरमाह प्रतियोगिव्यधिकरणस्यवेतिकेचित्तुसामानाधिकरण्यमभेदः तथाचहेतुसमानाधिकरणाभावी
यस्वाभिन्नप्रतियोगितावच्छेदकंयद्यत्स्वंतदन्यत्वंसाध्यतावच्छेदकेविवक्षितंप्रतियोगित्वंस्वरूपसम्बन्धविशेषः सचसामान्याभावस्थलेप्रतियोगितावच्छेदकस्वरू
पएवनतुप्रतियोगिस्वरूपः अननुगमाद्भेदेनाधाराधेयभावानुपपत्तेश्चसामान्यधर्मेण विशेषाभावस्थलेचप्रतियोग्यंशेप्रकारीभूतोविशेषधर्मएवतथानतुसामा
न्यधर्मः अतिप्रसक्तत्वात् व्यधिकरणधर्मावच्छिन्नाभावस्थलेचप्रतियोगितावच्छेदकादिस्वरूपंनप्रतियोगित्वंकिंत्वतिरिक्तमेवान्यथाप्रतियोगितावच्छेदक
विशिष्टप्रतियोगिनैवसार्द्धमभावस्यविरोधात् तदवच्छिन्नवतितादृशाभावस्यासत्वप्रसंगात् विवादोप्यतिरिक्तायांप्रतियोगितायामेवअन्यथासमनियताभावैक्येननिखि ति
लव्यधिकरणधर्मावच्छिन्नाभावस्यैवगगनाभावात्मकतयागगनाभावस्वीकर्तॄणांचिंतामणिकाराणांतदनंगीकारानुपपत्तेः इत्थंचपर्वतेवन्हित्वेनतार्णतार्णव
न्हीनस्तइतिप्रतीतिबलात्तादृशाभावप्रतियोगितावच्छेदकत्वस्यवन्हित्वेसत्वेपितादृशप्रतियोगित्वंनवन्हित्वाभिन्नं किंतुतादृशोभयत्वाभिन्नमतिरिक्तमेवेति
स्वाभिन्नायाःसाध्यवन्हिनिष्ठाभावप्रतियोगितायायदवच्छेदकंतदन्यत्वस्यवन्हित्वेसत्वान्नतस्यधूमव्यापकतावच्छेदकत्वहानिः नन्वत्रलक्षणेहेत्वधिकरणवृत्ति
त्वमभावस्यसम्बन्धमात्रेणनवाच्यं वन्हिसामान्याभावस्यापिकालिकादिसम्बन्धेनधूमवतिसत्वादव्याप्त्यापत्तेः नापिदैशिकविशेषणतयाघटभिन्नद्रव्यत्वा
दित्यादावतिव्याप्त्यापत्तेः घटत्वरूपस्यसाध्याभावस्यदैशिकविशेषणतयावृत्तित्वविरहादित्यतोलक्षणांतरमाह प्रतियोगिव्यधिकरणमित्यस्यैवेतिप्राहुः अप
रेतुप्रागुक्तंव्याप्यवृत्तित्वंयत्किंचित्घटितत्वेनदुर्वचमतः प्रतियोगिव्यधिकरणस्येत्यादिलक्षणांतरमुक्तमित्यप्याहुः अन्येतुकालिकसम्बन्धावच्छिन्नप्रतियो
गिकाकाशाभावाभावादौसाध्येआत्मत्वहेतावव्याप्तिः आकाशाभावात्मकस्यसाध्याभावस्यनिरवच्छिन्नवृत्तिकतयातत्प्रतियोगितावच्छेदकमेवसाध्यताव
च्छेदकमतःप्रतियोगिव्यधिकरणस्यवेतिलक्षणांतरमित्याहुः हेतुसमानाधिकरणस्यप्रतियोगिव्यधिकरणस्याभावस्यप्रतियोगितायाःसामानाधिकरण्ये
नानवच्छेदकंयत्साध्यतावच्छेदकमितियोजना अथात्रप्रतियोगिव्यधिकरणत्वंनस्वप्रतियोगिसमानाधिकरणभिन्नत्वंसमनियताभावानामभिन्नतयाघट
त्वेनघटाभावादेरपिघटत्वेनप्रमेयसामान्याभावस्वरूपत्वात्तस्यचप्रमेयात्मकप्रतियोगिसमानाधिकरणतयातदन्यत्वासंभवात् अतएवस्वप्रतियोगिताव राम
च्छेदकावच्छिन्नसमानाधिकरणोयोयस्तदन्यत्वमपिनतथाघटत्वेनघटाभावादेरपिप्रमेयत्वादिनाघटाद्यभावस्यद्रव्यत्वेनघटवद्वृत्तेरभावस्यवातादात्म्यो ११

पगमात् अप्रसिद्ध्यापत्तेः व्यधिकरणधर्मावच्छिन्नाभावस्यापि तत एव वारणसंभवे व्याप्तिः वारकसामानाधिकरण्येनेत्यस्य वैयर्थ्यापाताच्च नच साध्यतावच्छे
दकसम्बन्धेन यादृशप्रतियोगिताश्रयानधिकरणं तादृशप्रतियोगित्वप्रतियोगितां तार्थः। तथाच वन्हित्वेन घटाभावीयंघ टनिष्ठप्रतियोगित्वमपि तादृशमतस्त
च्छेदकत्वं वन्हित्वेप्यस्तीति सामानाधिकरण्यपदं तेन तादृशप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकाप्रसिद्ध्या तद्भिन्नप्रतियोगितैव लक्षणघटके तिवा
च्यं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेर्गुणादीनामपि विशिष्टसत्तानिष्ठप्रतियोगिताश्रयाधिकरणत्वात्। घटवान् महाकालत्वादित्यादावव्याप्तिप्रसंगा
च्च हेतुमतो महाकालस्य साध्यताघटककालिकसम्बन्धेन घटाद्यभावप्रतियोगिताश्रयाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरितिचेदत्राहुः साध्य
ताघटकसंबंधेन स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्वृत्त्यधिकरणिकायावस्यः प्रतियोगितास्तदन्यप्रतियोगित्वं प्रतियोगितांतार्थः। तथा
च वन्हित्वेन घटाद्यभावस्यापि घटादिनिष्ठाप्रतियोगितातादृशी(न)तदवच्छेदकत्वं वन्हित्वेप्यस्तीत्यतः सामानाधिकरण्यपदं घटवान् महाकालत्वादित्यादौ गग
नाभावीयं गगननिष्ठमेव तादृशं प्रतियोगित्वं सुलभमिति नकोपि दोषः वस्तुतो धूमवति वन्हित्वेन घटो नास्तीति वद्धूमवान् वन्हित्वेन न घटवान् किंतु घटत्वेनेति प्र
तीतिवलाद्व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावो व्यस्ति अतएव समवायितया वाच्यत्ववद्वेतो घटादौ पक्षधर्मिश्रैः स्वीकृतः तथा
च यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन साध्यतावच्छेदकसंबंधेन यादृशप्रतियोगिताश्रयाधिकरणान्यत्वं हेतुमतस्तादृशप्रतियोगितासमानाधिकर
णवृत्तित्वावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितावच्छेदकत्वाभाववत्त्वं तादृशप्रतियोगितावच्छेदकान्यत्वं वा साध्यतावच्छेदके विवक्षितं तथाच घटादिनिष्ठ
स्य वन्हित्वेनैव घटाद्यभावप्रतियोगित्वस्यापि तादृशत्वेन वन्हित्वादेस्तदवच्छेदकत्वादव्याप्तिरतः सामानाधिकरण्येनेत्युक्तं तथाच वन्हित्वस्य तादृशप्रति
योगितावच्छेदकत्वेपि तादृशप्रतियोगितासमानाधिकरणवृत्तित्वरूपव्यधिकरणधर्मेण तादृशप्रतियोगितावच्छेदकतात्यंताभावस्य तत्र सत्वान्नाव्याप्तिः कालो
घटवान् महाकालत्वादित्यादौ तु पटादिसामान्याभावप्रतियोगिता अतथात्वेपि घटत्वेन पटाद्यभावप्रतियोगितामादायैव लक्षणसमन्वयः कलः पटत्वेन पटः
वान् नतु घटत्वेनेत्यनुभवात् वन्हित्वादिसामान्यधर्मेण महानसीयवन्ह्याद्यभावसत्वेतु यादृशप्रतियोगितावच्छेदकेत्यत्रावच्छेदकत्वमनतिरिक्तवृत्तित्वं ग्राह्य
तच्च तदनतिरिक्तवृत्तित्वे सति तत्समानाधिकरणं यद्यत्तदन्यत्वं नातो व्यधिकरणधर्मावच्छिन्नप्रतियोगितायास्तत एव वारणसंभवे सामानाधिकरण्यदलवैयर्थ्यमि
त्यस्मद्गुरुचरणाः यत्तु यत्प्रतियोगितावच्छेदकविशिष्टस्य यत्प्रतियोगिताश्र यस्य च हेतोः साध्यतावच्छेदकसंबंधेनानधिकरणहेत्वधिकरणतादृशप्रतियोगित्वं

जा·व्या· प्रतियोगितांतार्थः। तथाचवन्हित्वेनघटाद्यभावस्यघटनिष्ठप्रतियोगितायाअपितादृशत्वाद्वन्हित्वादेस्तदवच्छेदकत्वमादायाव्याप्तिः। अतःसामानाधिकरण्येनेतिप्रागुक्तार्थकं एत
१२ न्मतेचसामान्यरूपेणविशेषाभावानभ्युपगमः नातोवन्हित्वेनतद्वन्ह्यभावमादायाव्याप्तिः नचस्वरूपसंबंधात्मिकप्रतियोगितायाःप्रतियोगिभेदेनभिन्नत्वाद्वन्हिमान्धूमादित्यत्राव्याप्तिः।
।। वन्हिसामान्याभावीयंयन्महानसीयवन्हिनिष्ठप्रतियोगित्वंतदवच्छेदकीभूतवन्हित्वविशिष्टस्यतत्प्रतियोगिताश्रयीभूतमहानसीयवन्हेश्चद्वयोरनधिकरण
त्वस्यहेतुमतिपर्वतेसत्वादितिवाच्यं। प्रतियोगिव्यक्तीनांभेदेपिएकधर्मावच्छिन्नप्रतियोगितायालाघवेनैक्यस्वीकारादिति नचकालोघटवान्महाकालत्वादित्यादौतादृश
प्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिःगगनाद्यभावीयप्रतियोगिताश्रयीभूतगगनस्याधिकरणाप्रसिद्ध्यातादृशप्रतियोगितायालक्षणाघटकत्वादितिवाच्यंमहाकालान्यत्वविशिष्ट
घटाद्यभावस्यतादृशविशिष्टघटत्वाद्यवच्छिन्नप्रतियोगिताव्यक्तेरेवतथात्वात् यत्प्रतियोगितावच्छेदकविशिष्टयत्प्रतियोगिताश्रयोभयत्वंवाहेत्वधिकरणयत्किंचि
न्निष्ठाधिकरणतानवच्छेदकंतादृशप्रतियोगितायाएवनिवेश्यतयागगनाभावादिकमादायैवलक्षणसंभवाच्चेति तन्न प्रतियोगिभेदेपिप्रतियोगितावच्छेदकाभेदेन
प्रतियोगितायायद्यभेदस्तदावन्हित्वेनघटाभावस्यवन्हित्वावच्छिन्नाघटनिष्ठप्रतियोगितासैववन्हित्वादिनावन्हिधूमोभयाभावस्यापिवन्हित्वावच्छिन्नाधूमादि
निष्ठाप्रतियोगितालाघवात् तथाचसामानाधिकरण्येनेत्यस्यवैयर्थ्यंदुर्वारंवन्हित्वेनघटाभावीयंयद्घटनिष्ठप्रतियोगित्वंतदवच्छेदकीभूतवन्हित्वविशिष्टस्यतादृशप्र
तियोगिताश्रयीभूतवन्हिधूमादेश्चद्वयोरधिकरणत्वस्यसर्वत्रैवहेतुमतिसत्वेनवन्हित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगितायालक्षणाघटकत्वादितिदिक् एवंचेति
तथाचास्यपारिभाषिकत्वान्नादरेपिनक्षतिरितिभावः। वन्हित्वाद्यवच्छिन्नघटाद्यभाववतिधूमादेर्वर्तमानत्वादुक्तंसाध्याभावेति अत्रसाध्याभावोव्याप्यवृत्तिर्बोध्यः
एवंपरत्रापिविशिष्टेति महानसीयत्वादिविशिष्टवन्हित्वावच्छिन्नप्रतियोगिताकस्येत्यर्थः। ननुविशिष्टस्यातिरिक्तत्वान्महानसीयत्ववन्हित्वयोर्वैशिष्ट्यस्यैववापरंपरया
तत्रावच्छेदकत्वान्नैषदोषइत्यतआह। हृदत्ववन्हित्वेति ननुव्याप्यवृत्तित्वघटितलक्षणयोःसंयोगिसत्वादित्यत्रातिव्याप्तिःस्वसमानाधिकरणाभावाप्रतियोगित्वस्यावच्छि
न्नवृत्तिकान्यत्वरूपस्यवाव्याप्यवृत्तित्वस्यसंयोगाभावेसत्वात्तआह सत्ववतीति तथाचहेतुसमानाधिकरणस्यव्याप्यवृत्तेरित्यंतेननिरवच्छिन्नहेत्वधिकरणवृत्तित्वंहे
त्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठाभावाप्रतियोगित्वंवाभावस्यविवक्षितमितिभावः।गुरुधर्मेणसाध्यतायांव्यभिचारिण्यतिव्याप्तिवारणायपारिभाषिकावच्छेदकत्वानु
सरणस्यावश्यकत्वेव्याप्यवृत्तित्वस्यप्रकृतनिरुक्तावप्रवेशेपिनक्षतिरित्याशयेनाह। वक्ष्यमाणंवेति। यथाश्रुतस्यप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्योक्तौसत्तावान् राम
जातिमत्वादित्यादावव्याप्तिः तादृशप्रतियोगितावच्छेदकीभूतविशिष्टसत्वानतिरिक्तवृत्तित्वात्सत्तात्वस्येत्यतोवक्ष्यमाणमिति सिद्धांतलक्षणेवक्ष्यमाणमित्यर्थः। तथा १२

चहेतुमन्निष्ठाभावीययत्संबंधावच्छिन्नप्रतियोगिताया: सामानाधिकरण्येनावच्छेदकंयद्धर्मविशिष्टसंबंधिनिष्ठाभावीयतत्संबंधावच्छिन्नप्रतियोगितायाः सामाना
धिकरण्येनावच्छेदकंतदेवपारिभाषिकावच्छेदकंतदन्यत्वंसाध्यतावच्छेदकेवाच्यमितिभावः। ननूत्पत्तिदृशायांगुणसामान्याभावस्यसंयोगवतिघटादौसत्वाद्गुण
त्वस्यसंयोगत्वविशिष्टसंबंधिनिष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वविरहान्नतमादायसंयोगत्वस्यपारिभाषिकावच्छेदकत्वसंभवनापीत्य तआ
ह। गुणावृत्तित्वेति। गुणासमवेतत्वेत्यर्थः। घटादावुत्पत्तिदृशायामपिगुणासमवेतस्यद्रव्यत्वादेःसत्वान्नतदभावइतिभावःसंयोगीगुणान्यत्वेसतिसत्वादित्यादौगुणा
वृत्तित्वमादायसंयोगत्वस्यनपारिभाषिकावच्छेदकत्वंसंभवति। गुणावृत्तित्वावच्छिन्नाभावस्यहेतुसमानाधिकरणत्वात्। अतःसंयोगसाध्यकव्यभिचारिमात्रे
यद्धर्ममादायसंयोगत्वस्यपारिभाषिकावच्छेदकत्वंतद्धर्ममाह। द्रव्यमात्रेति। द्रव्यान्यासमवेतत्वेत्यर्थः उक्ताभावानामव्याप्यवृत्तित्वेसंयोगात्मकस्वप्रतियोग्यधिकरण
वृत्तित्वेनकदाचिद्गुणत्वादिरूपाणांतत्प्रतियोगितावच्छेदकानांसंयोगत्वविशिष्टसंबंधिनिष्ठाभावप्रतियोगितानवच्छेदकत्वंनस्यात्। तदेवनास्तितेषांव्याप्यवृत्ति
तयासंयोगात्मकस्वप्रतियोग्यधिकरणावृत्तित्वादेतावन्मात्रंसूचयितुमुक्तं व्याप्यवृत्तीतिप्रगल्भलक्षणंदूषयितुमुपन्यस्यति साध्यतावच्छेदकेति स्वपदंविशिष्ट
हेतुपरं तथाचयद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वावच्छेदेनसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यंतद्धर्मवत्वंपर्यवसितमवच्छेदकत्वंच
त्रानतिरिक्तवृत्तित्वंव्यभिचारिणितुहेतुसामानाधिकरण्यस्यसाध्यसामान्याभावस्यैवसाध्यसामानाधिकरण्यविरहान्नातिप्रसंगः विशिष्टसत्तावान् जातेरित्यादौयावत
एवहेतुसमानाधिकरणस्यसाध्याभावस्यसत्तारूपसाध्यसामानाधिकरण्यादतिव्याप्तिः। अतःसाध्यतावच्छेदकावच्छिन्नेति। तथाचविशिष्टसत्ताभावस्यैवतादृशस्यवि
शिष्टसत्तारूपसाध्यसमानाधिकरणत्वाभावान्नातिप्रसंगः अत्रचसामानाधिकरण्यंयेनसंबन्धेनसाध्यतातेनसंबंधेनसाध्यस्याधिकरणेदैशिकविशेषणतयावृत्तिमत्वरू
पग्राह्यं तेनद्रव्यत्वादिसमानाधिकरणस्यज्ञानाद्यभावस्यविषयतयाज्ञानाद्यधिकरणेवृत्तावपिसमवायेनज्ञानसाध्यकेद्रव्यत्वादिहेतौनातिव्याप्तिः। नवाकालःप्रमेय
त्वादित्यादौसर्वेषामेवसाध्याभावानांसाध्यवतिकालेकालिकसंबंधेनवृत्तावप्यतिप्रसंगः। साध्याभावनिष्ठंहेतुसामानाधिकरण्यमपिहेतुतावच्छेदकसम्बन्धेनप्रकृत
हेतोर्यदधिकरणंतत्रविशेषणतयावृत्तिमत्वरूपंबोध्यं तेनापमात्माज्ञानादित्यादौविषयतयाज्ञानस्यहेतोरधिकरणेवर्तमानस्यात्मत्वाभावस्यद्रव्यविशिष्टसत्वादित्यादौचस
त्तासमानाधिकरणस्यद्रव्यत्वसामान्याभावस्यसाध्यसामानाधिकरण्यविरहेपिनाव्याप्तिः नवाकालःकालपरिमाणादित्यादौहेत्वधिकरणेकालिकसम्बन्धेनवर्तमानस्य
कालत्वादिसामान्याभावस्यसाध्यवतिदैशिकविशेषणतयावृत्तिमत्वविरहेपिक्षतिः साध्याभावस्तुपूर्वोक्तद्वितीयरीत्याबोध्यः तेनव्यधिकरणधर्मावच्छिन्नाभावास

ना·व्या त्वेपिसाध्यस्यविशिष्टाभावादिकमादायैवलक्षणसंभवान्नप्रतियोग्यवृत्तिश्चेत्यादिग्रंथावतारासंगतिः कपिसंयोगीसत्वादित्यादौतुकपिसंयोगाद्यभावेकेसाध्यसा॰
१३ मानाधिकरण्येपिद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्यसाध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः कालिकसंबंधावच्छिन्नप्रतियोगिताकेगग
नाभावस्याभावेसाध्येयत्रसमवेतत्वादिकहेतुस्तत्रहेतुमतिदैशिकविशेषणतयावर्तमानस्याकाशाभावात्मकस्यसाध्याभावस्यसाध्यवतिदैशिकविशेषणतयावृत्ता
वपिहेतुसमानाधिकरणस्यनित्यत्वादिसामान्याभावस्यापिनिरुक्तसाध्याभावतयातस्यैवसाध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः। यत्समानाधिकरणेति। यत्स॰
मानाधिकरणसाध्याभावप्रमासामान्यइत्यर्थः। तेनधूमवान्वन्हेरित्यादौव्यधिकरणधर्मावच्छिन्नसाध्याभावप्रमाव्यक्तेःसाध्यवत्ताज्ञानाविरोधित्वेपिसाध्यसामा
न्याभावप्रमायाएवसाध्यवत्ताज्ञानविरोधितयानातिव्याप्तिः। व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यसाध्यसामान्याभावत्वभ्रमदशायांपर्वतोवन्हिमानित्याकार
कसाध्यवत्ताज्ञानविरोधित्वात्संभवःस्यादतः प्रमात्वोपादानंप्रमात्वंचात्रभ्रमसामान्यभिन्नज्ञानत्वंनातस्तादृशबुद्धेरपि अंशतःप्रमात्वादुक्तदोषतादवस्थ्यंहृदादौव
न्हिसामान्याभावप्रमायाःसाध्यवत्ताज्ञानविरोधित्वादव्याप्तिरतोयत्समानाधिकरणेति फलतः प्रमाविशेषणं तथाचयद्धर्मावच्छिन्नवद्विशेष्यकसाध्याभावप्रमासा
मान्यइत्यर्थः। तेनवृक्षत्वसमानाधिकरणस्यसंयोगसामान्याभावस्यैवगुणे धर्मिणिप्रमायाःसाध्यवत्ताज्ञानविरोधित्वेपिसंयोगिवृक्षत्वादित्यादौनाव्याप्तिः। यत्तु
साध्यवत्ताज्ञानविरोधित्वंहेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकंयत्साध्यवत्ताज्ञानंतद्विरोधित्वरूपंवाच्यं तथाचगुणोनसंयोगीतिप्रमायागुणःसंयोगीत्याकारकबु
द्धिविरोधित्वेपितादृशीसाध्यवत्ताधीर्नहेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यिकागुणत्वादेर्हेतुमदन्यावृत्तित्वादतोनोक्तदोषइति तत्तुच्छं यत्समानाधिकरणे
त्यस्यव्यर्थत्वापत्तेःसाध्याभावप्रमासामान्येयद्धन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानस्यविरोधित्वनास्तितत्वमित्यस्यैवसम्यक्त्वात्जलादिधर्मिक
वन्हिसामान्याभावप्रमायाःसाध्यवत्ताधीर्विरोधित्वेपिधूमवन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकंयद्वन्हिमत्ताज्ञानंतद्विरोधित्वाभावादेववन्हिमान्धूमादित्यादावव्या
प्त्यसंभवादितिदिक् अत्रचसाध्यतावच्छेदकेनसंबंधेनतेनरूपेणचसाध्यवत्ताज्ञानंबोध्यं तेनपर्वतोनसमवायेनवन्हिमानित्यादिप्रमायाःसमवायेनवन्हिम
त्ताबुद्धिंप्रतिपर्वतोमहानसीयवन्हिमान्नेतिप्रमायाश्चसंयोगेनमहानसीयवन्हिमत्ताबोधंप्रतिप्रतिबंधकत्वेपिवन्हिमान्धूमादित्यादौनाव्याप्तिः प्रतिबंधकत्वंचा
वच्छेदकधर्मवत्ताज्ञानव्यावृत्तंग्राह्यं तेनवन्हिसामान्याभावावच्छेदकतयागृहीतस्यमहानसीयवह्न्यभावादेः पर्वतादौप्रमायाःसंयोगसंबंधावच्छिन्नपर्वतधर्मिकवन्हि राम·
मत्ताबुद्धिविरोधित्वेपिनासंभवः सर्वत्रेति साध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणत्वकत्वमित्यतएवप्रथमस्यहितीयस्यचयत्समानाधिकरणप्रमासा॰ १३

वि

मान्येसाध्यवत्ताज्ञानविरोधित्वंनास्ति तत्त्वमित्यतएवसामंजस्यादितिभावः।यत्तुयत्सामानाधिकरणसाध्याभावत्वावच्छेदेनसाध्यतावच्छेदकावच्छिन्नप्रतियोगिसा॰
मानाधिकरण्यंतत्त्वमेवप्रथमलक्षणार्थः।तथाचधूमसमानाधिकरणस्यघटादिसामान्याभावस्यवह्नित्वाद्यवच्छिन्नघटाद्यप्रसिद्ध्यासाध्यतावच्छेदकावच्छिन्नप्रतियोगि
सामानाधिकरण्याभावादसंभवःस्यादतः साध्याभावपदं नचैवमपिप्रतियोगिपदंव्यर्थमेवेतिवाच्यंअनतिरिक्तवृत्तित्वरूपावच्छेदकत्वेसाध्यतावच्छेदकावच्छिन्नप्रति
योगिसामानाधिकरण्याभावस्याखंडस्यैवनिष्ठत्वात् एवंद्वितीयलक्षणेपिसाध्यतावच्छेदकावच्छिन्नप्रतियोगिमताग्रहविरोधित्वनिवेश्यसाध्याभावपदस्यसार्थक्यं॰
बोध्यमिति तन्मंदं प्रतियोग्यवृत्तिश्चेत्यादिग्रंथावतारानुरोधेनसाध्याभावस्यपूर्वोक्तद्वितीयरीत्यैववक्तव्यतयाहेतुसमानाधिकरणस्य वह्नित्वेनघटाभावादेरेवसाध्यता
वच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याप्रसिद्ध्यातादृशपदप्रक्षेपेप्यसंभवतादवस्थ्यात् नचघटत्वेनवह्न्यभावोवह्नित्वेघटाभावात्मकःसमनियताभावानां॰
मैक्यात् तथाचतस्यापिसाध्यावच्छेदकविशिष्टवह्निस्वरूपप्रतियोगिनःसामानाधिकरण्यमक्षतमेवेतिवाच्यंतथासतिघटसामान्याभावादेरपिघटत्वादिनाप्रमेय
सामान्याभावात्मकतयातस्यापिसाध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रमेयरूपप्रतियोगिसमानाधिकरणतयातमादायासंभववारकस्यसाध्याभावपदस्य॰
व्यर्थतायावज्रलेपत्वादिति प्रगल्भस्यैवलक्षणांतरमुपन्यस्यति।यत्त्विति।यद्वृत्ताविति।यन्निष्ठसाध्याभाववद्वृत्तिसामान्यइत्यर्थः।तेनवह्निनिष्ठस्यव्यधिकरण
धर्मावच्छिन्नाभाववद्वृत्तित्वस्यधूमसाध्यकानुमित्यविरोधित्वेपिधूमवान्वह्नेरित्यादौनातिव्याप्तिः धूमादिनिष्ठेंधनत्वाद्यवच्छिन्नवह्न्यभाववद्वृत्तित्व स्यापिइंधनत्वा
दिप्रकारेणवह्न्यनुमितेर्विरोधित्वादसंभवःस्यादतः प्रकृतेतिसाध्यतावच्छेदकसम्बन्धेनरूपेणचप्रकृतसाध्यकेइत्यर्थः तथाचतादृशसाध्याभाववद्वृत्तित्वस्यवह्नि
त्वेनवह्न्यनुमितिंप्रत्यविरोधित्वाद्दोषः प्रकृतानुमितिविरोधित्वेनप्रकृतानुमितिविरोधिज्ञानविषयत्वमात्रं धूमनिष्ठवृत्तित्वस्यापिवह्न्यनुमितिविरोधिनोव्यभिचारभ्र
मस्यविषयत्वसंभवात् किंतुविषयितयाप्रकृतानुमितिप्रतिबंधकतावच्छेदकत्वं तथाचवह्निनिष्ठवृत्तित्वमात्रस्यधूमसाध्यकानुमितिविरोधितावच्छेदकत्वाभावाद्व्य
भिचारिण्यतिव्याप्तिरतः साध्याभाववतीति। तथाचयन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यंप्रकृतानुमितिप्रतिबंधकतानवच्छेदकंतत्त्वमर्थः नचघटाभावव
द्वृत्तित्वादौसाध्याभाववद्वृत्तितात्वभ्रमदशायामपिधूमसाध्यकानुमित्युत्पत्त्यावह्निनिष्ठनिधूम वद्वृत्तित्वधूमसाध्यकानुमितिप्रतिबंधकतानवच्छेदकत्वाद्व्यभिचारि
ण्यतिव्याप्तितादवस्थ्यमितिवाच्यं यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यंनप्रकृतानुमितिप्रतिबंधकतानतिरिक्तवृत्तिस्तत्त्वमित्यस्योक्तत्वात्।साध्याभावस्तुपू॰
र्वोक्तद्वितीय रीत्याप्रवेशनीयः तेननपूर्वोक्तदोषः।अनुमित्यविरोधित्वज्ञानस्येति।अनुमितिविरोधित्वंहिनसाक्षादनुमितिप्रतिबंधकत्वंव्यभिचारधियःसाक्षात्तथात्वेन

नु

आ॰व्य॰ व्यभिचारिमात्रेतिप्रसंगापत्तेः। किंत्वनुमितिजनकज्ञानविरोधित्वंतज्ज्ञानकंचयदिनिरुक्तव्याप्तिज्ञानेतदाताहशज्ञानंप्रतिनसाध्याभाववद्वृत्तित्वज्ञानंविरोधिकिंतु
१४ साध्याभाववद्वृत्तित्वमनुमितिविरोधीत्याकारकज्ञानमेवतथेतिव्यभिचारिण्यतिव्याप्तिः। यदितुसाध्याभाववदवृत्तिर्हेतुरित्याकारकज्ञानंप्रकृतानुमितिजनकंत
दातिरिक्तव्याप्तेरनुमित्यनुपयुक्ततयातदभिधानमर्थांतरग्रस्त मितिभावः। एतेनपरिष्कृतानुमितिपदंप्रकृतहेतुधर्मिकसाध्याभाववदवृत्तित्वानुमितिपरं। ननुप्रकृतसाध्यकानु
मितिपरंविरोधित्वंचात्रसाक्षात्त्वेननिविष्टातेनदानव्यभिचारिण्यतिप्रसंगइत्यपास्तं ताहशव्याप्तेरनुमित्यनुपयुक्ततयातद भिधानेर्थांतरतादवस्थ्यमितिमिश्र
लक्ष मेवपरिष्कृत्योपन्यस्यति। केचित्त्विति। केवलान्वयिन्यप्रसिद्धावपिवन्ह्यादिसाध्यकेव्यतिरेकिणियावंतःसाध्याभावास्तत्तत्सजातीयत्वेतत्तदधिकरणवृ
त्तित्वाभावेताहशान्यतररूपात्मकमप्रसिद्धमतउक्तंप्रत्येकमिति। यावंतःसाध्याभावास्तेषामपिसजातीयत्वंएकस्मिन्नभावेनास्त्यतउक्तं। तत्तत्सजातीयाइति। त
दधिकरणवृत्तित्वाभावाइत्यर्थः तत्पदेनयावत्साध्याभावपरामर्शेवन्हिमान्धूमात्इत्यत्रसामान्याभाववान्वायुत्वादित्यादौसाध्याभावात्मकतत्तद्धृपक्षावृत्तित्वा
वच्छिन्नाभावप्रसिद्ध्यापाद्यधिकरणाप्रसिद्ध्याव्याप्तिरतस्तत्तदधिकरणेति। तथाचप्रातिस्विकरूपेणसाध्याभावानुपादायतत्सजातीयस्तदधिकरणावृत्तित्वाभावो
ग्राह्यइतिभावः। व्यधिकरण धर्मावच्छिन्नसाध्याभावसजातीयंघटत्वादिनातत्तदधिकरणवृत्तित्वाभावमादायव्यभिचारिण्यतिव्याप्तिवारणाय यावंतइति त
थाचसाध्यसामान्याभावसजातीयस्यतदधिकरणवृत्तित्वाभावस्यतत्रासत्वाददोषःसाध्यसामान्याभाववद्वृत्तित्वस्यैवव्यधिकरणधर्मावच्छिन्नाभावोव्यभिचारिण्य
प्यस्तीत्यतः सजातीयइत्युक्तं। ननुघटत्वेननिर्धूमवृत्तित्वस्याभावोपिअभावत्वादिनाधूमसामान्याभावसजातीयएवेत्यतिव्याप्तितादवस्थ्यमतआह साजात्यंचेति।
यद्यपिसाध्याभावनिष्ठंयत्समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपंतेनैवरूपेणसाजात्यंवाच्यं तथा
चवन्हिसामान्याभावादिनिष्ठंयत्ताहशान्यतररूपंवन्हिनिष्ठवन्हित्वावच्छिन्नप्रतियोगिताकत्वस्वरूपंतस्यनिर्वन्हिवृत्तित्वसामान्याभावेऽसत्वादसंभवः तथापिया
वंतःसमानाधिकरणधर्मावच्छिन्नाभावास्तावदन्यतमत्वतद्भिन्नत्वान्यतररूपेणसाजात्यंवाच्यमित्यदोषः। समनियताभावानामैक्यात्। गगनाभावएवनिखिलव्य
धिकरणधर्मावच्छिन्नाभावइतिमतेतुगगनाभावत्वतदन्यत्वान्यतररूपेणैवसाजात्यंवाच्यं तेनघटत्वेननिर्धूमवृत्तित्वाभावस्यैवगगनत्वादिसमानाधिकरणधर्मा
वच्छिन्नप्रतियोगिताकतयाधूमसामान्याभावसजातीयत्वेपिनातिव्याप्तिः। साध्याभावश्चेति साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियो राम॰
गिताकाभावोऽत्रसाध्याभावपदेनोक्तइत्यर्थः। साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वरूपप्रथमरीत्याभिधानेघटत्वविशिष्टवाच्यत्वाद्यभावस्यापिसाध्याभाव १५

पदार्थतयातत्तत्सजातीयस्यतदधिकरणवृत्तित्वाभावस्यापिहेतावसत्वादसंभवः स्यादतस्तत्परित्यागः। अत्रसाध्यव्यापकताघटकसम्बन्धेनैवसाध्यव्यापकस्याभावोग्राह्यस्तेनैकसम्बन्धेनसाध्यव्यापकस्यसम्बन्धांतरावच्छिन्नाभाववतिहेतौवृत्तावपिनक्षतिः यत्तुसाध्यतावच्छेदकसम्बन्धेनसाध्यव्यापकत्वंतेनैवसाध्यव्यापकस्याभावोनिवेश्यतइतिमतं तत्तुच्छं यत्रतादात्म्यसम्बन्धेनप्रमेयमात्रसाध्यंतत्रतेनसम्बन्धेनसाध्यव्यापकतावच्छेदकंयत्प्रमेयत्वादिकंतादात्म्येनतदवच्छिन्नप्रतियोगिताकाभावाःसिद्ध्यातत्रसद्धेतावव्याप्तिःप्रमेयत्वेनघटपटोभयभेदस्वीकारेणकथंचित्तत्राव्याप्तिवारणेपिवृत्त्यनियामकसम्बन्धेनसाध्यतायामव्याप्तिः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः किंचैवंधूमवान्वन्हेरित्यादावतिव्याप्तिसंयोगेनधूमसामान्याभावस्याव्याप्यवृत्तितयाधूमत्वेनघटाद्यभावस्यैवतादृशस्ययावदंतर्गतत्वेनतत्सजातीयस्यतदधिकरणवृत्तित्वाभावस्यवन्हौसत्वात्। अस्माकंतुस्वरूपसम्बन्धेनायः पिण्डभेदस्यापिधूमव्यापकतयावन्हेस्तदभाववद्वृत्तित्वाभावादेवातिव्याप्तिनिरासादितिबोध्यम्। ननुकपिसंयोगीएतद्वृक्षत्वादित्यत्राव्याप्तिः। कपिसंयोगसामान्याभावस्यापिप्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेनयावदन्तर्गतत्वात्तत्सजातीयस्यतदधिकरणवृत्तित्वाभावस्यहेतावभावादतआह व्याप्यवृत्तिश्चेतिव्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वंसंयोगीसत्वादित्यादौतुद्रव्यत्वादिसामान्याभावस्यापिसाध्याभावतयाहेतोस्तदधिकरणवृत्तित्वादेवनातिव्याप्तिः ननुरूपवान्पृथिवीत्वादित्यादावव्याप्तिः रूपत्वेननित्यसमवेताभावस्यापिनिरुक्तयावत्साध्याभावांतर्गतत्वात्तत्सजातीयस्यतदधिकरणवृत्तित्वसामान्याभावस्यापिहेतावसत्वात्सामान्यधर्मेणविशेषाभावस्वीकारेतुरूपत्वेनतद्रूपाभावमादायाप्यव्याप्तिरतआह। प्रतियोगितावच्छेदकावच्छिन्नेत्यादि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वंच यत्प्रतियोगिताकाभावस्यावच्छेदकसम्बन्धेनस्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यंतदन्यप्रतियोगिताकत्वंबोध्यं तेननित्यरूपात्मकेनप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनासामानाधिकरण्यविरहेप्युक्ताभावस्यनसंग्रहः नवावाच्यत्व त्वेनप्रमेयत्वाद्यभावस्यैवज्ञेयत्वत्वेनवाच्यत्वाद्यभावतयाव्यधिकरणधर्मावच्छिन्नाभावमात्रस्यैवप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्येपितदसंग्रहः अत्रचनिरुक्तायास्तदन्यप्रतियोगितायाएवसाध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वंबोध्यंतेनसंयोगात्मकस्यैवसाध्याभावस्यसमवेतसामान्याभावनिष्ठनिरुक्तप्रतियोगिताकत्वकपिसंयोगाभावत्वरूपसाध्यव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वयोः स

जा॰व्या त्वेपिकपिसंयोगाभाववान्वाच्यत्वादित्यादौरूपत्वेननित्यसमवेताभावस्यैवनित्यरूपसामान्याभावतयातत्रनित्यरूपत्वावच्छिन्नं निरुक्तप्रतियोगिताकत्वसाध्यव्यापकता
१५ वच्छेदकीभूतरूपत्वावच्छिन्नप्रतियोगिताकत्वयोःसत्त्वेपिरूपवान्पृथिवीत्वादित्यादौनाव्याप्तिः समवेतसामान्याभावत्वाद्यवच्छिन्नप्रतियोगितायाःसाध्यव्यापकताव
च्छेदकरूपानवच्छिन्नत्वादितिध्येयम्। द्वितीयरीतेःप्रवेशफलमाह तत्तत्साध्यव्यक्तेरिति अभाववतिहेतोर्वृत्तावपिनाव्याप्तिरित्यन्वयः व्याप्यवृत्तित्वादेःफलमाह॥
अव्याप्यवृत्तेर्वासाध्यस्येति ततत्साध्याभावेत्यादिसामान्यतःसाध्याभाववद्वृत्तित्वत्वव्यापकेत्युक्तौवन्हिसामान्याभावसजातीयव्यधिकरणधर्मावच्छिन्नाभावसा
धारणसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्याप्रसिद्ध्याव्यतिरेकिमात्रेऽव्याप्तिरतस्तत्तदितिसाध्याभावस्यविशेषणं तथाचनिर्वन्हिवृत्तित्वसामान्या
भावएवनिर्वन्हिवृत्तित्वत्वव्यापकप्रतियोगिताकस्तत्रसाध्याभावसजातीयत्वमस्तीत्यदोषः नन्वेवमपिजलवृत्तित्वत्वेननिर्धूमवृत्तित्वाभावस्यनिरुक्तरूपशालिनो
वन्हौसत्त्वादतिव्याप्तिः नचव्यासज्यवृत्तिधर्मानवच्छिन्नत्वंपरित्यज्यस्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमेवप्रतियोगितायाविशेषणंवाच्यमतोनोक्तदोषः तथापिगुणभे
दाभावसजातीयस्यपूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावस्यहेतौसत्वाद्गुणभिन्नंसत्वादित्यादावतिप्रसंगादतआह तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तस॰
मानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकोवाबोध्यइत्ययंपाठः क्वचित्तु तत्रचातिरिक्तातेननिर्वन्हिवृत्तित्वसामान्याभावादेःसंग्रहः अन्यथावन्हिसामान्याभा
वसजातीयस्यसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्याऽव्याप्तिप्रसंगात् नचनिर्धूमत्वादिसजातीयस्यनिर्धूमवृत्तित्वत्वादिनावन्ह्यवृत्तेरभाव
स्यहेतौसत्वाद्धूमवान्वन्हेरित्यादावतिव्याप्तिर्हेतुनाघटकसम्बन्धावच्छिन्नवृत्तितामात्रनिष्ठत्वेनप्रतियोगितायानिवेशनीयत्वेपिनिर्धूमवृत्तित्वत्वेनजलवृत्तित्वजला
न्यनिर्धूमवृत्तित्वोभयाभावमादायातिव्याप्तितादवस्थ्यमितिवाच्यं एतदस्वारस्येनैव यद्वेत्यादिलक्षणांतरस्यवक्ष्यमाणत्वात् यद्यपितत्तत्साध्याभाववद्वृत्तित्वत्वावच्छि
न्नाभावइत्यस्यैवसम्यक्त्वेसमानाधिकरणधर्मादिकंप्रक्षिप्यनिषेधद्वयप्रवेशोनिरर्थकः सर्वत्रव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेनघटाद्यभावस्यैवता
दृशस्यसाध्याभावसजातीयस्यसम्भवात् तथापियथासन्निवेशेनैवयाथार्थ्यम्। यत्रतादात्म्येनसम्बन्धेनहेतुतातत्रसद्धेतौव्यधिकरणधर्मावच्छिन्नसाध्याभावतादात्म्य
स्यजगत्त्वरूपतयातादृशतादात्म्यत्वस्यकेवलान्वयित्वेनतदवच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिः स्यादतोवानिषेधद्वयगर्भतापत्तुतत्तत्साध्याभाववद्वृत्तित्वत्वावच्छि
न्नाभावाद्युक्तावसंभवःस्याद्व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः तादृशवृत्तितात्वमपेक्ष्यलघु वृत्तित्वत्वमात्रस्यवोक्ताभावप्रति राम॰
योगितावच्छेदकत्वादिति तत्तुच्छं गुरोःप्रतियोगितावच्छेदकत्वअंगीकृत्यैवलक्षणकरणात् अन्यथामहाकालभेदेसाध्येजन्यत्वविशिष्टघटादेःकालिकसंबंधेनहे १५

तुतायामव्याप्तिप्रसंगात्। महाकालभेदाभाववद्वृत्तित्वत्वमपेक्ष्य लघुनावृत्तित्वत्वमात्रेणैव महाकालभेदाभाववद्वृत्तित्वाभावप्रतियोगितायाअवच्छेदात् महाकाल
भेदाभावसजातीयस्य तद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेरिति ध्येयम्। तादृशवृत्तित्वत्वव्यापकेत्यस्य प्रयोजनमाह
साध्याभाववद्वृत्तिविशेषवृत्तित्वस्येति अभावमादायनातिप्रसंग इत्यन्वयः। ननुव्यभिचारनिरूपकाधिकरणव्यक्त्यन्यत्वस्याभावस्यापिसाध्याभावतया तद्वृत्तित्वसा
मान्याभावस्य व्यभिचारिण्यसत्वात्कुतोऽतिव्याप्तिरत आह पार्थिवत्वादिति पार्थिवत्वविशिष्टं यन्निर्धूमवृत्तित्वं तद्वन्हौनास्ति वन्हेरपार्थिवत्वादित्यतिप्रसंग इति भावः
आदिना जलत्वादिपरिग्रहः व्यासज्यवृत्तिधर्मानवच्छिन्नेत्यस्य प्रयोजनमाह। द्वित्वाद्यवच्छिन्नस्य वेति निर्धूमवृत्तित्ववन्हिभेदोभयत्वावच्छिन्नस्य वेत्यर्थः। नदोषइति
अन्यथा निर्वन्हिसंयुक्तत्वाभावस्य साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावान्निर्वन्हिवृत्तित्वसामान्याभावस्य च धूमेऽसत्वादव्याप्तिरेवस्यादिति भावः इत्थं
चसाध्याभाववद्वृत्तित्वस्य हेतुतावच्छेदकसंबन्धेनोक्तेत्यर्थः तादृशसम्बन्धेन हेत्वधिकरणत्वानुप्रवेशे गौरवमतः कस्यचिदित्युक्तं तथा च हेतुतावच्छेदकसंबंधाव
च्छिन्नाधिकरणतावद्वृत्तित्वसाध्याभावविशेषणमित्यर्थः सत्वादित्यादावित्यादिपदेन वन्हिमान्धूमादित्यादेः परिग्रहः तत्रापि जातिसामान्याभावादेः साध्याभावतया तद्वृत्ति
संयोगसंबन्धेन वृत्यप्रसिद्धेरव्याप्तिसंभवात् ननु द्रव्यं विशिष्टसत्वादित्यत्राव्याप्तिः विशिष्टसत्तस्य केवलसत्तानतिरेकेण द्रव्यत्वाभाववत्तिवृत्त्या द्रव्यत्वाभावसजातीय
स्य तद्वृत्तित्वाभावस्य हेतावसत्वात्। नचैवं विशिष्टहेत्वधिकरणे वर्तमान एव साध्यीयो गृह्यतां तावतैवोक्तदोषव्युदासादिति वाच्यम्। तथापि धूमवान्वन्हेरित्यत्रातिव्या
प्तिः निर्धूमवृत्तित्वसामान्याभावस्य महानसीयवन्हौसत्वात् नच हेतुतावच्छेदकधर्मावच्छेदेन तादृशवृत्तित्वाभाववत्त्वं विवक्षितं तथासत्यपि निर्धूमत्वादिसजातीयं निर्धू
मवृत्तित्वत्वेन रूपेण वन्ह्यवृत्तेरभावात् द्रव्येण जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभाववादायातिव्याप्तितादवस्थ्यादत आह यद्वेति वन्हित्वावच्छिन्नधूमाभाव
सजातीयस्य तद्व्यापकीभूतस्य तस्यैवाभावस्य प्रतियोगितावच्छेदकेन वन्हित्वादिना वन्हित्वाद्यवच्छिन्नं प्रतिव्यापकतावच्छेदकत्वाद्व्यभिचारिण्यतिव्याप्तिरतो यावंत
इति तथा च धूमादिसामान्याभावस्यापि साध्याभावतया यावदन्तर्गतत्वात् व्यापकीभूताभावप्रतियोगितावच्छेदकेन तत्तद्वन्हित्वादिना वन्ह्यादिकं प्रतिव्यापकत्वाभा
वोन्नातिव्याप्तिः तत्तद्वन्ह्यभावसजातीयस्य तद्व्यापकीभूताभावस्य प्रतियोगितावच्छेदकेन तत्तद्वन्हित्वादिना धूमादिकं प्रतिव्यापकत्वाभावादसंभवः स्यादित्यतस्ता दृ
शा साध्याभावा इति साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावा इति तदर्थः। तत्तद्वन्हित्वादिकं तु न साध्यव्यापकतावच्छेदक
मतस्तदवच्छिन्नाभावमादाय नोक्तदोषः तादृशयावत्साध्याभावसाजात्यं तादृशसाध्याभाववृत्तिप्रागुक्तान्यतररूपवत्त्वं तच्च व्यतिरेकिण्यप्रसिद्धमतः प्रत्येकमिति।

यद्यपि तादृशयावत्साध्याभावानां प्रत्येकनिरूपितमपि साजात्यं नकुत्राप्यभावेस्तीति व्यतिरेकिण्यव्याप्तितादवस्थ्यं। तथापि तेषामित्यत्र तस्य तस्य तस्येत्येकशेष
करणात् यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयस्य तत्तद्व्यापकीभूताभावस्य लाभाद्दोषः धूमादिसामान्याभावव्यापकस्य वन्हित्वादिना घटाद्यभावस्य प्रतियोगि
तावच्छेदकेन वन्हित्वादिना वन्हित्वाद्यवच्छिन्नं प्रतिव्यापकत्वाद्व्यभिचारिण्यतिव्याप्तिरतः सजातीयस्येति साजात्यं तु प्रागुक्तदिशा ग्राह्यं तेन संयोगादिसम्बन्धावच्छि
न्नद्रव्यत्वाद्यभावप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना वन्ह्यादिव्यापकत्वेपि धूमवान्वन्हेरित्यादौ नातिव्याप्तिः तादृशाभावस्य धूमादिसामान्याभावसाजात्यविरहा
दिति ध्येयम्। धूमादिसामान्याभावसजातीयस्य तद्व्यापकीभूतस्य च वन्हिसंयोगाद्यभावस्य प्रतियोगितावच्छेदकेन वन्हिसंयोगत्वादिना वन्ह्यादिकं प्रतिव्यापकत्वादति
व्याप्तिरतो व्याप्यवृत्तेरिति वस्तुतो वन्हित्वेन धूमवद्भेदाभावस्य प्रतियोगितावच्छेदकेन वन्हित्वेन वन्हिं प्रतिव्यापकत्वादतिव्याप्तिरतो व्याप्यवृत्तिता निरूपकप्रतियोगि
तायाश्च लाभाय व्याप्यवृत्तिपदं तेन यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियो
गितायाएवलक्षणघटकत्वान्नोक्तदोषः धूमाद्यभावसजातीयस्य वन्ह्याद्यभावस्य प्रतियोगितावच्छेदकेन वन्हित्वादिना वन्ह्यादिकं प्रतिव्यापकत्वाद्धूमवान्वन्हेरित्या
दावतिव्याप्तिरतो व्यापकीभूतस्येति यद्यपि तद्व्यभिचारस्थलान्यत्वाभावस्यापि निरुक्तसाध्याभावतया तत्समानाधिकरणस्य तत्सजातीयाभावस्य प्रतियोगितावच्छे
दकेन धर्मेण तत्तदयोगोलकभेदत्वादिना वन्हित्वाद्यवच्छिन्नं प्रतिव्यापकत्वाभावात्सामानाधिकरण्यमात्रोक्तावपि नातिव्याप्तिः तथापि साध्याभावव्यापकत्वघटितनिरु
क्तसाध्याभावसजातीयाभावे साध्याभावसामानाधिकरण्यस्याप्रविष्टतया न व्यापकीभूतपदैतस्य व्यर्थतेति ध्येयम्। यत्तु साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकता
यायदवच्छेदकं तेन सम्बन्धेन तद्रूपावच्छिन्नाभावोत्र साध्याभावपदार्थः तथाचायोगोलकभेदत्वस्य न संयोगात्मकसाध्यतावच्छेदकसम्बन्धेन धूमव्यापकतावच्छेद
कत्वमिति तदवच्छिन्नाभावो न साध्याभावः। किन्तु धूमाद्यभावः एवं च तत्समानाधिकरणस्य वन्ह्याद्यभावस्य प्रतियोगितावच्छेदकेन वन्हित्वादिना वन्हित्वाद्यवच्छिन्नं
प्रतिव्यापकत्वादतिव्याप्तिरतः समानाधिकरणेत्यपहाय व्यापकीभूतस्येत्युक्तं नचैवं वन्हिमान्धूमादित्यत्रैवाव्याप्तिः संयोगेन वन्ह्याद्यभावस्यापि साध्याभावतया तस्य
केवलान्वयितया तत्सजातीयतद्व्यापकीभूतव्याप्यवृत्त्यभावाप्रसिद्धेरिति वाच्यम्। यावन्तो व्याप्यवृत्तयः साध्याभावास्तेषामेव प्रवेश्यतया वन्हिसामान्याभावस्य निरव
च्छिन्नहेत्वधिकरणवृत्तिकत्वरूपव्याप्यवृत्तित्वविरहेण यावदन्तर्गतत्वात् धूमाद्यभावस्तु वन्हिमदयोगोलक एव तादृशव्याप्यवृत्तिरिति तन्न तादात्म्येन प्रमेयमात्र
स्य साध्यतायामव्याप्तेः तत्र प्रमेयत्वादेरेव तादात्म्येन साध्यव्यापकतावच्छेदकतया तादात्म्येन तदवच्छिन्नाभावाप्रसिद्धेः अन्ये तु यावन्तः साध्याभावाः प्रत्येकं तत्सजा

तीयनिष्ठं यद्रूपावच्छिन्नप्रतियोगिताकाभाववत्त्वं तत्तत्साध्याभावव्यापकतावच्छेदकं तत्तद्रूपेण यद्रूपावच्छिन्नं प्रतिव्यापकत्वमवच्छिद्य तेन तद्रूपवत्त्वमर्थः तत्र च साध्याभाव
व्यापकतावच्छेदकत्वमपहाय साध्याभावसमानाधिकरणवृत्तित्वोक्तौ गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यत्रातिव्याप्तिः गुणान्यत्वविशि
ष्टसत्ताभावाभावरूपस्य द्रव्यान्यत्वाद्यभावरूपस्य वा निरुक्तसाध्याभावस्य सजातीये समानाधिकरणे सत्तास्वरूपेऽभाववत्ते तद्द्रव्यान्यत्वविशिष्टसत्ताभावत्वस्वरूप
धर्मावच्छिन्नप्रतियोगिताकाभाववत्त्व तेन द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मेण हेतुतावच्छेदकावच्छिन्नप्रतिव्यापकतावच्छेदात् साध्याभावव्यापकतावच्छे
दकत्वोक्तौ तु द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वेन गुणान्यत्वविशिष्टसत्ताभावाभावाद्यात्मकस्य द्रव्यान्यत्वाद्यभावरूपस्य वा साध्याभावस्य
व्यापकतावच्छेदकत्वं द्रव्य एव व्यभिचारात् तेनोक्तदोष इति प्राहुः द्रव्यं विशिष्टसत्वादित्यादौ व्यापकीभूततादृशाभावप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना गुण
कर्मान्यत्वविशिष्टसत्तादिकं प्रतिव्यापकतानवच्छेदाद् व्याप्तेराह। यद्रूपावच्छिन्नेति। न चेदं गमनं स्पन्दत्वादित्यादौ तादृशगतित्वाद्यभावस्य प्रतियोगितावच्छेदकीभूतगतित्वा
दिनापि कालिकसम्बन्धेन स्पन्दत्वव्यापकत्वाद् अतिव्याप्तिरिति वाच्यं तादृशाभावस्य यत्सम्बन्धावच्छिन्नप्रतियोगिताया अवच्छेदको यो धर्मस्तत्प्रतियोगितावच्छेदकसम्बन्धे
न हेतुव्यापकत्वस्योक्तत्वादिति भावः परैः परिष्कृतं निरसितुमाह। साधनस्येत्यादिना। तादृशेति। यावन्तः साध्याभावाः प्रत्येकं तत्सजातीयव्यापकीभूताभावेत्यर्थः। तदवच्छे
दकत्वमिति॥ तत्तत्साध्याभावसजातीयतद्व्यापकीभूताभावप्रतियोगितावच्छेदकत्वं चेत्यर्थः। प्रथमे दूषणमाह। द्रव्यमित्यादिना। तादृशाभावेति साध्याभावसजातीयव्यापकी
भूताभावेत्यर्थः। द्वितीये दूषणमाह। ज्ञेयं प्रमेयादित्यादि प्रमेयत्वादेरिति न च सामान्यधर्मेण विशेषाभावस्याप्यव्यवस्थापितत्वात् प्रमेयत्वेन गगनाभावस्यैव प्रागुक्तक्रमे
ण साध्याभावसजातीयस्य प्रतियोगितावच्छेदकं मेयत्वमादाय नाव्याप्तिरिति वाच्यं वह्नित्वेन महानसीयवह्न्यभावस्य धूमसाध्यकवह्न्यावृत्तिव्याप्तिभिया स्वाधिकदेश
वृत्तिधर्मानवच्छिन्नप्रतियोगितायाः प्रवेश्यत्वात् प्रमेयत्वेन गगनाभावप्रतियोगितायाश्चातथात्वात् विषयत्वाद्यपेक्षया गुरोः प्रमाविषयत्वस्य प्रतियोगितानवच्छेद
कत्वेनोक्ताव्याप्तितादवस्थ्यमिति भावः वस्तुतस्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयो यस्तत्तत्समानाधिकरणोऽव्याप्यवृत्त्यभावः तत्प्रतियोगित्वमेव व्याप्तिः व्या
प्यवृत्तित्वं तु प्रकृतहेतुसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभाव भिन्नत्वोभयाभाववत्त्वं तेन धूमसामान्याभावसमानाधिकरणतत्तत्सजातीयस्य वह्निधूमोभयत्वा
द्यवच्छिन्नाभावस्य प्रतियोगित्वेऽपि धूमसाध्यकवह्न्यादौ नातिव्याप्तिस्तादृशोभयाभावस्य च निरुक्तव्याप्यवृत्तित्वाभावात् एवं च यत्राभावे प्रकृतसाध्यसामानाधिकरण्य
व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावः स एव साध्याभावपदार्थः तेनाऽभाववान् प्रमेयत्वादित्यादौ साध्यप्रतियोगिकस्य घटादिवृत्तित्वावच्छिन्नाभा

वस्याधिकरणेघटादौवर्त्तमानस्यतत्तत्सजातीयहेत्वभावस्यनिरुक्तव्याप्यवृत्तित्वाप्रसिद्धावपिनाव्याप्तिः इत्थंचद्रव्यंसत्वादित्यादौगुणान्यत्वाद्यभावस्यापिनिरुक्तसा
ध्याभाववत्तात्तदधिकरणगुणादौवर्त्तमानस्यतत्तत्सजातीयाभावस्यनिरुक्तव्याप्यवृत्तित्वाप्रसिद्धावनातिव्याप्तिः वाच्य प्रमेयादिसाध्यकादौतुव्यधिकरणधर्मावच्छिन्न
वाच्यत्वाद्यभावसमानाधिकरणस्यविरुद्धघटत्वपटत्वाभ्यांप्रमेयाभावस्यापिघटत्वादिनावाच्यत्वाद्यभावस्य चवानिरुक्तव्याप्यवृत्तित्वाशालिनःप्रतियोगितामादा
यलक्षणसंभवइति यथाश्रुतमेवमिश्रलक्षणंसम्यगितिप्रतीमः नचवह्निमान्धूमादित्यादावव्याप्तिः यावत्साध्याभावान्तर्गतद्रव्यसामान्याभावसजातीयनिरुक्तव्या
प्यवृत्तिसमानाधिकरणाभावप्रतियोगित्वस्यधूमादावसत्वात् संयोगेनधूमस्याव्याप्यवृत्तितयाधूमाद्यभावस्यलक्षणाघटकत्वादितिवाच्यं संयोगेनद्रव्यस्यव्याप्य
वृत्तित्वाद्धूमद्रव्यान्यतराभावस्यनिरुक्तरूपशालिनःप्रतियोगित्वधूमादौसत्वान्नवमिश्रलक्षणमितिप्राहुः व्यापकीभूतस्यसजातीयस्येत्यादिपरित्यागेनलघुलक्ष
णमाह। यद्वेति। तादृशादिति प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावादित्यर्थः। अत्रापियेनसम्बन्धेनसाध्यव्यापकतातत्सम्बन्धावच्छि
न्नाभावानांप्रतियोगितावच्छेदकधर्मस्तत्संबन्धेनयद्रूपावच्छिन्नप्रतिव्यापकत्वमवच्छिद्यतेइतिपर्यवसितार्थस्तेनगमनस्पन्दत्वादिसाध्यकेगमनत्वाद्यभावप्रतियो
गितावच्छेदकैर्गमनत्वत्वादिभिः कालिकसम्बन्धेनस्पन्दत्वादिहेतुव्यापकत्वेपिनातिव्याप्तिः नवाच्यत्वादिभेदप्रतियोगितावच्छेदकमादायैवकेवलान्वयिस्थलेल
क्षणसंभवप्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः नचधूमत्वेनधूमाभावस्यैववह्नित्वेनधूमवद्वृत्तेरभवत्वात्पिंडान्यत्वाभावस्यचायःपिंडान्यत्वनिरूपित
स्वरूपसंबंधेनभेदत्वावच्छिन्नाभाववत्तात्तत्प्रतियोगितावच्छेदकीभूतवह्नित्वभेदत्वादिभिर्वह्नित्वाद्यवच्छिन्नप्रतिव्यापकतावच्छेदात् धूमवान्वह्नेरित्यादावव्या
प्तिव्याप्तिरितिवाच्यं यत्प्रतियोगिताकाभावेस्वावच्छेदकावच्छिन्नवद्वृत्तित्वव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगितायाएवावच्छे
दकधर्मस्यलक्षणघटकत्वादितिसंक्षेपः परेत्विति साध्याभाववद्वृत्तित्वस्यघटत्वादिनाऽभावमादायव्यभिचारिण्यतिव्याप्तिरतोयावंतदित्युक्तं तादृशवृत्तित्वाभाववत्व
मत्रदैशिकविशेषणतयाग्राह्यम् तेननिर्धूमवृत्तित्वादिसामान्याभावस्यापिकालिकादिसम्बन्धेनवन्ह्यादिवृत्तित्वाद्यवत्वोपादानेपिनातिव्याप्तितादवस्थ्यं वह्नि
मान्धूमाद्घटान्यत्वेसत्वादित्यादावव्याप्तिः व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वत्वादिसमनियतप्रतियोगिताकस्यसंयुक्तत्वादिसामान्याभावस्यहेता
वसत्वात् अतोवृत्तिमदन्तयःइत्युक्तंतदनुक्तावसंभवस्तन्नास्तितादात्म्यसंबंधेनसद्धेतावेवनिरुक्तलक्षणसंगमनात् व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ता
दात्म्यप्रतियोगिकस्यव्यधिकरणधर्मावच्छिन्नाभावस्यैववस्तुगत्यातादृशवृत्तित्वत्वव्यापकप्रतियोगिताकतयातथाविधयावदभावस्यैवहेतोसत्वादितिध्येयम्।

येनसम्बन्धेनहेतुतावृत्तिमद्वृत्तयद्वस्त्वत्रापिवृत्तिमत्त्वंतेनबोध्यमितिपाठः।तदभावस्येति।तत्सामान्याभावस्येत्यर्थः।जात्यादाविति।समवेतत्वघटितजातित्वोक्त्यासं
बन्धान्तरेणयोवृत्तिमान्तद्वृत्तित्वमुपदर्शितंनक्षतिः।नाव्याप्तिः।हेतुताघटकसंबन्धेनयोवृत्तिमान् तदवृत्तित्वेनतादृशाभावस्ययावदन्तर्गतत्वादितिभावः।अत्रवृत्तिम
द्वृत्तितादैशिकविशेषणतयाग्राह्या। तेनवाच्यंद्रव्यत्वादित्यादौव्यधिकरणधर्मावच्छिन्नवाच्यत्वाभाववत्समवेतत्वसामान्याभावस्यहेतुताघटकसम्बन्धेनवृत्तिम
त्स्पंदादौकालिकसबन्धेनवर्तमानस्यदैशिकविशेषणतयाद्रव्यत्वादिहेतावसत्त्वेनाव्याप्तिः। अत्रापीत्यपिकारेणसाध्याभाववतिवृत्तिरपिहेतुताघटकसम्बन्धेनवाच्ये
तिव्यंजितं। तेनतत्तद्धूमावयवान्यत्वाभावस्यापिपूर्वोक्तवृत्तीयरीत्यासाध्याभाववत्त्वेनतद्वृत्तिसम्बन्धसामान्येनयावृत्तिस्तदभावस्यतत्तद्धूमावयवासमानकालिकद्रव्य
वृत्तेर्धूमहेतावसत्त्वेऽपिवह्निमान्धूमादित्यादौनाव्याप्तिः ननुसाध्यप्रतियोगिकाभावमात्रस्यप्रवेशेधूमस्यतत्तद्वह्न्यभाववद्वृत्तित्वेनवह्निमान्धूमादित्यादावव्याप्तिः।साध्य
तावच्छेदकधर्मावच्छिन्नाभावप्रवेशेतुगगनादेःसाध्यत्वेद्रव्यत्वादावतिव्याप्तिः साध्याभावस्यकेवलान्वयित्वात् एवंघ्राणग्राह्यगुणवान्प्रमेयत्वात्पृथिवीत्वादित्या
दावव्याप्तिः तादृशधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धेरतआह।साध्याभावश्चेति।पूर्ववदिति।प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकोव्याप्यवृ
त्तिश्चाभावोऽत्रसाध्याभावपदार्थः।अत्रापियेनसम्बन्धेनव्यापकतातत्संबन्धेनतादृशरूपावच्छिन्नाभावोग्राह्यः तेनज्ञानवानात्मत्वादित्यादौस्वरूपसम्बन्धेनसाध्यव्या
पकस्यप्रमेयत्वादेःकालिकसम्बन्धेनाभावाधिकरणसमवेतत्वाभावस्यस्पंदत्वनिष्ठस्यहेतावसत्त्वेऽपिनक्षतिः यत्तुसाध्यतावच्छेदकसम्बन्धेनतादृशरूपावच्छिन्नाभा
वानांविवक्षणात् ज्ञानवानात्मत्वादित्यादावपिनाव्याप्तिः कालिकसम्बन्धेनप्रमेयत्वाभावस्यसाध्यताघटकसमवायसम्बन्धानवच्छिन्नत्वात् इत्थंचव्यापकतापि
तेनैवग्राह्या तेनविषयतयासाध्यव्यापकस्यज्ञानादेःसाध्यताघटकसमवायेनाभाववतिहेतोर्वर्तमानत्वेऽपिद्रव्यंपृथिवीत्वादित्यादौनाव्याप्तिः। तत्तुच्छंवृत्त्यनियामकसंब
न्धेनसाध्यतायांतदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्यासद्धेतावव्याप्तेः धूमवान्वह्नेरित्यादावतिव्याप्तेश्चसंयोगेनव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैवव्या
प्यवृत्तितयातद्वृत्तित्वाभावस्यापिव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैववृत्तिमद्वृत्तित्वात्प्रमेयंद्रव्यत्वादित्यादौतादात्म्येनसाध्यतायामव्याप्तेश्च साध्यताघ
टकतादात्म्येनप्रमेयत्वादेरेवसाध्यव्यापकतावच्छेदकतयातत्सम्बन्धेनतदवच्छिन्नाभावाप्रसिद्धेरित्यादिक् वह्निमान्धूमादित्यादावव्याप्तिः वह्निसंयोगाभावस्यापि
साध्यव्यापकतयातदभावात्मकवह्निसंयोगवद्वृत्तित्वसामान्याभावस्यघटादिनिष्ठस्यहेतावसत्वादतोव्याप्यवृत्तित्वेनाभावोविशेषितः वस्तुतः निरुक्तसाध्याभावाधि
करणत्वमवश्यविशेषणताविशेषसम्बन्धेनप्रवेश्यम् अन्यथाद्रव्यंगुणादित्यादौद्रव्यत्वाभावस्यकालिकसंबन्धेनाधिकरणेगुणस्यवृत्तेर्द्रव्यत्वाभाववत्समवेतत्वसा

जा॰व्य मान्याभावस्यज्ञानादिनिष्ठस्य हेतावसत्त्वादव्याप्तेः तथाच वन्हिसंयोगाद्यात्मकभावस्य तादृशसम्बंधेनाधिकरणाप्रसिद्धेस्तमादायाव्याप्तिवारणार्थं नव्याप्यवृत्तिपदं
१८ परंतु रूपवान्पृथिवीत्वादित्यादौ नित्यत्वादिनारूपाद्यभावस्यापि तादृशधर्मावच्छिन्नाभावतया तद्वृत्तसमवेतत्वाभावस्य नित्यरूपादिनिष्ठस्य हेतावसत्त्वादव्याप्तिरतो व्या
प्यवृत्तिपदं न च तस्यापि व्याप्यवृत्तित्वादुक्तदोषतादवस्थ्यं यत्प्रतियोगिताकाभावे स्वावच्छेदकसंबन्धेन स्वावच्छेदकावच्छिन्नवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्ना
भावभिन्नत्वस्य हृयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छिन्नतादृशप्रतियोगिताकाभावस्योक्तत्वान्नित्यत्वादिनारूपाद्यभावस्य व्यधिकरणधर्मावच्छिन्ना
भावभिन्नस्य स्वावच्छेदकीभूतनित्यत्वाद्यवच्छिन्नवृत्तित्वादेव व्युदासः एतेन संयोगाभावत्वादेः साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया प्रतियोगिवैयधिकर
ण्याघटितसाध्यव्यापकतानवच्छेदकत्वेपि नव्याप्यवृत्तिपदवैयर्थ्यमिति ध्येयम् ननु वन्हिमान्धूमादित्यादावालोकाद्यवृत्तित्वादिनालोकावृत्तिसामान्याभावोपि साध्या
भाववद्वृत्तित्वाभावो स्यादवंतर्गतः संयोगादिसम्बन्धेन वन्हिसामान्याभाववद्वृत्तित्वस्याप्यालोकावृत्तिमध्ये निवेशात् एवमिंधनत्वावच्छिन्नवन्ह्यभावाधिकरणीभूतं
महानसवृत्तित्वादेर्महानसवृत्तित्वत्वादिनायोऽभावः सोपि साध्याभाववद्वृत्तित्वाभावो यावदंतर्गतस्तयोधूमादावसत्त्वादसंभव इत्यत आह। तद्वृत्तित्वाभावोपीति भिन्नल
क्षणइवात्रापि तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वप्रवेशे आलोकावृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य हे
तावसत्त्वाद्वन्हिमान्धूमादित्यत्राव्याप्तिरतोन्यथाव्याचष्टे स्वव्यापकेति स्वप्रतियोगितातद्व्यापकीभूतप्रत्साध्याभाववद्वृत्तित्वत्वं तद्व्यापकप्रतियोगिताकत्वमित्यर्थः
व्यधिकरणधर्मावच्छिन्नसाधारणसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरत उ
क्तं। तत्तदिति। तथाच निर्धूमवृत्तित्वाभावस्यैव स्वव्यापकत तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगितया तस्य वन्हावसत्त्वान्नातिव्याप्तिरिति भावः स्वनिष्ठवृत्तित्वेन
वृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकस्य हेत्वंतरवृत्तेः स्वस्मिन्नसत्त्वात्सद्धेतुमात्रेऽसंभ वापत्तेरतः क
ल्पान्तरमाह तत्तदिति समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकस्य यावदभावस्यैव व्यभिचारिण्यतिप्रसंगादतिरिक्तां तत्रापि निर्धूमवृतित्वत्वस्यापि सामान्यतः
साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छिन्नसामान्याभावमादायातिव्याप्तिवारणायोगात् तत्तदित्युक्तं न चैवमपि व्यधिकरणधर्मावच्छि
न्नद्रव्यत्वाभाववद्वृत्तित्वत्वेन घटवृत्तित्वजातित्वान्यतराभावं घटावृत्तेर्वाभावमादाय द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः हेतुतावच्छेदकसंम्बन्धावच्छिन्नवृत्तित्वभि राम
न्नावृत्तित्वेनापि प्रतियोगितायाविशेषणीयत्वात् अतएव तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावाद्युक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः साध्याभाववद्वृत्तित्व १८

त्वावच्छिन्नं यद्धेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वभिन्ना वृत्तिप्रतियोगित्वं तादृशप्रतियोगिताकस्य वृत्तिमद्वृत्त्यभावस्याप्रसिद्धेरतो निषेधद्वयगर्भता तेन घटत्वा
दिना तादृशवृत्तित्वाभावमादायैव लक्षणसंगतिः केचित्तु यद्यपि तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्ना यावन्तोऽभावा इत्येव लाघवादुक्तमुचितं तथापि वाच्यत्वे ज्ञेयत्वादित्यादौ
तादात्म्येन हेतौ जगत एव साध्याभाववत्तादात्म्यतया तादृशतादात्म्यत्वावच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिरतो निषेधद्वयगर्भता इत्थं च विरुद्धघटत्वपटत्वाभ्यामेव तादृशवृत्तित्वा
भावः सुलभ इति प्राहुः। यत्तु वृत्तित्वत्वमपेक्ष्य गुरोर्वाच्यत्वाभाववद्वृत्तित्वत्वस्य प्रतियोगितानवच्छेदकतया केवलान्वयिन्यव्याप्तिभिया तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छि
न्नाभावा नोक्ताः तत्तुच्छं गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमादायैव लक्षणकरणात् अन्यथैतत्कल्पे वृत्तिमद्वृत्तिपदवैयर्थ्यापत्तेः वृत्तित्वत्वमात्रस्यैव तत्तत्साध्याभा
ववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छिन्नाभावमादायैवाव्याप्त्यभावात् किं चैवं गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे तद्घटभिन्नं द्रव्यत्वादित्यादावति
व्याप्तिरपि स्यात् तद्घटवृत्तित्वत्वापेक्षया गुरुत्वेन तद्घटभेदाभाववद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः तद्घटवृत्तित्वत्वस्य साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधि
करणधर्मतया तदवच्छिन्नाभावस्य लक्षणाघटकत्वात् एवं स्नेहशून्यं द्रव्यत्वादित्यादौ स्नेहशून्यत्वाभाववद्वृत्तित्वादेर्जलवृत्तित्वत्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसि
द्ध्यातिव्याप्तिर्दुष्टैवेति दिक् यस्य कस्यचित्सामानाधिकरण्यमव्यावर्तकमतस्तत्तत्प्रतियोगितासामानाधिकरण्यनिवेशापेक्षया लाघवमनुसृत्याह वृत्तित्ववृत्तिना वेति तत्त
त्साध्याभाववद्वृत्तितात्वातिरिक्तेनेति पूर्वेणान्वयः तथा च तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तवृत्तित्ववृत्तिधर्मानवच्छिन्नेत्यर्थः साध्याभाववद्वृत्तित्ववृत्तिना वेति पाठे सा
ध्याभाववत्त्वस्य दुःसंग्रहतापात् यद्यपि वृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य धूमत्वादिसामान्याभावस्य घटाद्यन्यत्वाभावस्य वा हेतावसत्त्वाद्वह्निमान् धूमादित्यादौ
सर्वत्रासंभवः तादृशधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावविवक्षणेऽपि घटभेदत्वेन घटभेदनिर्वह्निवृत्तित्वान्यतराभावस्य तादृशस्य हेतावसत्त्वात् तथापि पू
र्ववदत्रापि कल्प्यहेतुतावच्छेदकसंबंधावच्छिन्नवृत्तित्वभिन्नावृत्तित्वेन प्रतियोगित्वं निवेशनीयमित्यदोषः स्वन्यूनवृत्तिधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताया ए
व तादृशवृत्तित्वत्वातिरिक्तवृत्तित्वनिष्ठधर्मानवच्छिन्नत्वं विवक्षितमिति केचित् वृत्तित्ववृत्तिना धर्मेण वेति पाठे तु धूमत्वाद्यभावमादायासंभवापत्तेरेव धर्मेण वेति कल्पा
न्तरोल्लेखः तथा च धूमत्वत्वघटभेदत्वादेस्तादृशवृत्तित्वत्वातिरिक्तधर्मत्वादेव नासंभवः वाच्यं प्रमेयादित्यादौ तु तादात्म्येन हेतौ विरुद्धघटत्वपटत्वाभ्यामवृत्तिगगना
दिना वा वृत्तित्वाभावमादाय लक्षणसमन्वय इति ध्येयम् स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वेऽस्य फलमाह आलोकाद्यवृत्तित्वेनेति
निर्वह्निवृत्तित्वस्येति प्रतियोगितायास्तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकत्वप्रदर्शनार्थं

जा॰व्या॰ नचस्वव्यापकवृत्तित्वत्वकेत्युक्तावपि आलोकावृत्तित्वावच्छिन्नाभावस्यवारणसंभवात्प्रतियोगिताव्यापकत्वदिशितुतत्तत्साध्याभाववत्त्वप्रवेशोव्यर्थइतिवाच्यं आलो
१९ कावृत्तिवृत्तित्वाभावमादाययाव्याप्तिवारणार्थं तस्यावश्यकत्वात्स्वसमानाधिकरणात्यंताभावाप्रतियोगितत्साध्याभाववद्वृत्तित्वत्वव्निष्ठात्यंताभावाप्रतियोगिप्रतियोगि
ताकत्वरूपपर्यवसितार्थे तत्तत्साध्याभाववतः सकृदेवनिविष्टतयावैयर्थ्यशंकानवकाशाच्चेतिभावः तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगितेत्यस्यफलमाह य
श्चेति आदिनावाच्यत्वत्वादेः परिग्रहः घटत्वादेः साध्यव्यापकतावच्छेदकत्वाभावात्तदवच्छिन्नवन्ह्यभावस्यलक्षणाघटकत्वात्तउक्तंइंधनत्वादीति इन्धनत्वावच्छि
न्नाभावस्यमहानसादावसत्वात्तमादाययत्सतिविरहात्तोवन्ह्यभावेति तादृशवृत्तित्वत्तव्यापकप्रतियोगिताकेत्यस्यानुक्तावसंभवएवस्यान्नतुवन्हिमान्धूमादित्यत्रा
व्याप्तिमात्रंप्रमेयमात्रस्यहेतुतास्थलेतत्तत्प्रमेयनिष्ठवृत्तित्वाभावस्यप्रमेयांतरवृत्तेस्तत्तत्प्रमेये विरहादित्येवमावेदयितुंसर्वसाधारण्येनाह। स्वनिष्ठेति। स्वनिष्ठं यत्सा॰
ध्याभाववद्वृत्तित्वंतत्सामान्याभावस्येत्यर्थः। अत्रघटत्वादौसाध्येस्वीयविशेषणतयाघटान्यत्वादिहेतावतिव्याप्तिः साधनस्यैवहेतुतावच्छेदकसम्बन्धेनवृत्तिम
त्तयातन्निष्ठयावदभावस्यैवहेतौसत्वात् नचैतस्यविरुद्धत्वात्साध्यसमानाधिकरणत्वेनहेतुविशेषणादेवनातिव्याप्तिरितिवाच्यं तथापिद्रव्यत्वादौसाध्येस्वीयसमवा
यादिनासत्वादिहेतावतिव्याप्तिः तादृशसम्बन्धेनहेतोरेववृत्तिमत्तयातन्निष्ठयावदभावस्यसाध्यसामानाधिकरण्यस्यचहेतौसत्वात् एवंमहाकालान्योघटादित्यादौ
कालिकसम्बन्धेनहेतावतिव्याप्तिः वृत्तिमन्मात्रस्यैवहेतुताघटकसम्बन्धेनमहाकालवृत्तेस्तेनसम्बन्धेनतद्वृत्तित्वाभावासंभवात् नचमहाकालवृत्तित्वसामान्याभा
वस्यापिप्रलयावच्छेदेनपटादावेववृत्तिमद्वृत्तित्वान्नातिव्याप्तिरितिवाच्यं। सामानाधिकरण्यस्यव्याप्यवृत्तित्वात्। अन्यथाघटादिहेतावपिखंडकालावच्छेदेनमहाका॰
लवृत्तित्वाभावसत्वादुक्तातिव्याप्तितादवस्थ्यात् एवंद्रव्यत्वादेः साध्यतायामवृत्तिगगनादिहेतावतिव्याप्तिर्विशिष्टसत्तायामव्याप्तिः द्रव्यान्यस्मिन्गुणादौविशिष्टसत्ताया
वृत्तिमत्वादितिवदंति यदिचवृत्तिमद्वृत्तयोयावतः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधिकरणतासामान्यकथमेवत्वंव्याप्तिरितिविवक्ष्यते तदानैतेषामपिकोपि
दोषः पदमादधातिवृत्तिमद्वृत्तयइत्यत्रसर्वत्रदैशिकविशेषणतासम्बन्धेनवृत्तेर्निवेशनीयत्वात् अन्यथाधिकरणत्वमात्रस्यैवसंयोगादिसम्बन्धेनावर्तमानत्वाद्धूमवान्व
न्हेरित्यादावतिव्याप्तिरितिध्येयम्। अन्येत्वित्यादि। अत्रसाध्याभावकूटाधिकरणवृत्तित्वस्यघटत्वादिनाभावमादायव्यभिचारिण्यतिव्याप्तिरतोयावन्तइति तथाचतादृश
वृत्तित्वसामान्याभावस्यहेतावसत्वान्नातिप्रसंगः नचतादृशवृत्तित्वत्वावच्छिन्नाभाववत्वोक्तावपितादृशातिव्याप्तिव्युदासः संभवतीतिवाच्यं तथापितादृशवृत्तित्वत्वे राम॰
नघटादेरभावमादायातिव्याप्तितादवस्थ्यात् तादृशवृत्तित्वत्वस्यगुरुतयातदवच्छिन्नाभावाप्रसिद्धेश्च अतएवतादृशवृत्तित्वसामान्याभाववत्वमपिनविवक्षितं केव १९

लान्वयिन्यव्याप्तेश्च वाच्यत्वाभावकूटवद्वृत्तित्वसामान्याभावस्य हेतावसत्त्वादिति भावः इत्थमपि वाच्यत्वाभावकूटवद्वृत्तित्वसामान्याभावस्यैव यावदन्तर्गतस्य ज्ञेय
त्वादिहेतावसत्त्वाद्वाच्यं ज्ञेयत्वादित्यादावव्याप्तिरतो वृत्तिमद्वृत्तियदुक्तं तथा चैतस्य वृत्तिमद्वृत्तित्वान्न तस्य निरुक्तयावदन्तर्गतत्वं किन्तु घटत्वादिना तादृशवृत्तित्वाभा
वस्यैव स च ज्ञेयत्वादिहेतौ वर्तत इति नाव्याप्तिः अत्र वृत्तिमत्त्वादिकं पूर्वलक्षणदिशावसेयं तेन न प्रागुक्तदोषः ननु प्रलयभिन्नं गोत्वादित्यादौ कालिकसम्बन्धेन हेतावतिव्या
प्तिः महाकालस्य कालिकसंबंधेन प्रलयान्यत्वाभावकूटवत्त्वेन तत्र हेतुताघटकसम्बन्धेन यावृत्तिस्तस्याः व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात् न च दैशि
कविशेषणतया साध्याभावकूटवत्त्वं विवक्षितमतस्तादृशकूटवत्प्रलयवृत्तित्वसामान्याभावस्याधुनिकघटादिवृत्तेर्गोत्वहेतावसत्त्वान्नातिव्याप्तिरिति वाच्यं घटत्वाभाववा
न् घटत्वादित्यादावभावसाध्यकेऽव्याप्तिप्रसंगात् साध्याभावकूटान्तर्गतस्य घटत्वस्वरूपसाध्याभावस्य विशेषणतयाधिकरणाप्रसिद्धेः दैशिकविशेषणतया वृत्तिमत्तामे
व साध्याभावानां प्रवेशे तु घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिर्व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव तत्र दैशिकविशेषणतया वृत्तिमत्तया तत्कूटवद्वृत्तित्वस्या
पि तादृशधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात् एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगगनत्वाभावस्याभावे साध्ये ज्ञानादिहेतावव्याप्तिः गगनत्वाद्यभाव
घटितकूटस्य दैशिकविशेषणतासम्बन्धेन यदधिकरणं तद्वृत्तित्वसामान्याभावस्य वृत्तिमति शब्दादौ प्रसिद्धस्य ज्ञानादिहेतावभावादिति चेन्न साध्यतावच्छेदकसम्ब
न्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धेः संसर्गविधया प्रतिबन्धकतावच्छेदकीयः सम्बन्धस्तेन वृत्तिमतः साध्याभावकूटस्य तादृशसंबंधेनैवाधिकरणत्व
स्योक्तत्वात् संयोगाभाववान् प्रमेयत्वादित्यादौ च संयोगादिरूपसाध्याभावो न तादृशसम्बन्धेन वृत्तिमान् निरवच्छिन्नसमवायादिसम्बन्धेनैव संयोगादिनिश्चयस्य तद्वि
रोधित्वात् तेन तत्राव्याप्तिः केवलान्वयिनि तादृशाभावप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धिर्भ्रमरूपैव सुलभा सत्यां हि घटत्वेन वाच्यत्वं नास्तीति बुद्धौ जात्व
पि घटत्वेन वाच्यत्वमस्तीति ज्ञानानुदयात् घटत्वाभाववत्ताबुद्धिं प्रति च समवायादिना घटत्ववत्तानिश्चयस्य प्रतिबंधकत्वादेवोक्ताव्याप्तेर्व्युदासः तादृशवृत्तित्वत्व
व्यापकप्रतियोगिताकत्वप्रवेश एव समुदायपदं सार्थकं भवत्यतः प्रागेव वृत्तित्वाभावं व्याचष्टे तादृशेति स्वेति स्वंप्रतियोगितातद्व्यापकं यत्साध्याभावकूटवद्वृत्तित्वत्वं
तद्व्यापकप्रतियोगिताकेत्यर्थः। प्रयोजनं चैति वन्हिमान् धूमादित्यत्रालोकावृत्तिसामान्याभावस्य साध्याभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य यावदन्तर्गत
स्य हेतावसत्त्वादव्याप्तिरतः स्वव्यापकेति तथा चालोकावृत्तित्वावच्छिन्नप्रतियोगित्वस्य व्यापकं न निर्वह्निवृत्तित्वत्वं धूमत्वादौ व्यभिचारादयमभावो न लक्षणघ
टक इति नाव्याप्तिः प्रतियोगितायां तादृशवृत्तित्वत्वव्यापकत्वानुक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः प्रतियोगिताव्यापकसाध्याभावकूटवद्वृत्तित्वत्वकस्य घटवृत्ति

जा॰व्या॰ त्वाभावस्ययावदंतर्गतस्यहेतावसत्वात् तदुपादानेचतादृशाभावप्रतियोगित्वंनवाच्यत्वाभावकूटवद्वृत्तित्वत्वव्यापकंपटवृत्तित्वेव्यभिचारादित्येतस्यलक्षणाघटकत्वान्न
२० व्याप्तिरितिभावः अत्रचप्रतियोगित्वस्वन्यूनवृत्तिधर्मानवच्छिन्नंग्राह्यं तेनेदंवाच्यंज्ञेयत्वादित्यादौदोषः घटवृत्तित्वत्वेनवृत्तित्वसामान्याभावस्यघटान्यत्वादिवृत्तेर्हेतावसत्वे
पिनाव्याप्तिः। सार्वभौममतेएकविशिष्टापरत्वमेवोभयत्वं तेनघटवृत्तित्वघटान्यवृत्तित्वोभयाभावमादायनाव्याप्तिः तादृशप्रतियोगितायास्तादृशवृत्तित्वत्वाव्यापकत्वादि
तिध्येयम्। स्वव्यापकत्वदलस्यपूर्वोक्तलक्षणोक्तव्यावृत्तिः तादृशवृत्तित्वत्वव्यापकत्वदलस्यतुनप्रागिववन्हिमान्धूमादित्यादावव्याप्तिः तत्रमहानसादेःसाध्याभा
वकूटानधिकरणात् किंतुकेवलान्वयिस्थलएवेत्याशयेनाह। उक्तप्रायमिति। नचस्वव्यापकेत्याद्यपेक्षयालाघवात्साध्याभावकूटवद्वृत्तित्वत्वावच्छिन्नाभावाएवयाव
तोनिवेश्यंतां तादृशवृत्ति त्वत्वेनघटादेरभावमादायकेवलान्वयिनिलक्षणसंभवादिति वाच्यंवन्हिमान्धूमाद्वाच्यंज्ञेयत्वादित्यादौसर्वत्रासंभवापत्तेःनिर्वन्हिवृत्तित्वत्वा
द्यपेक्षयागुरुत्वेनवन्ह्यभावकूटवद्वृत्तित्वत्ववाच्यत्वाभावकूटवद्वृत्तित्वत्वादेःप्रतियोगितानवच्छेदकत्वेनतदवच्छिन्नाभावाप्रसिद्धेरितिभावः। ननुवृत्तिमद्वृत्तयोयाव
तःसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावास्तद्वत्त्वमेवोच्यतां कृतंकूटपदनिवेशेनेत्यतआह। साध्याभावेति। साध्यप्रतियोगिकाभावेत्यर्थः। व्यधिकरणेति।
साध्यप्रतियोगिकाभाववद्वृत्तित्वसामान्याभावस्यावृत्तिमात्रनिष्ठत्वादितिभावः। अंतइति। तथाचधूमाभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्यनिर्धूमवृत्तित्व
सामान्याभावस्यैववन्ह्यादिहेतावसत्वान्नव्यभिचारिण्यतिव्याप्तिः नचैवंगगनाभाववान्वाच्यत्वादित्यादावव्याप्तिः गगनस्यापिसाध्याभावतयातदधिकरणाप्रसिद्धेरिति
वाच्यं वृत्तिमत्वेनापिसाध्याभावस्यविवक्षणीयत्वात् नव्यमतेगगनस्यस्वाभावविरहत्वेमानाभावाच्चेतिभावः। अत्रसाध्याभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगितेत्य
त्रकूटपदस्यफलंग्रंथकृतैवोक्तं प्रतियोगिताव्यापकसाध्याभाववद्वृत्तित्वत्वमित्यत्रकूटपदस्यफलंतुनालोकावृत्तेरभावमादायवन्हिमान्धूमादित्यादावव्याप्तिवारणं तादृ
शाभावस्यस्वव्यापकवृत्तित्वत्वकप्रतियोगिताकेत्युक्तावपिवारणसंभवाद्धूमत्वादावपितदभावप्रतियोगितासत्वात् परंत्वालोकावृत्तिवृत्तित्वस्याभावमादायाव्याप्तिवा
रणमेवतत्फलमितिप्रांचः तत्तुच्छं स्वाश्रयनिष्ठात्यंताभावाप्रतियोगिनः साध्याभावकूटवद्वृत्तित्वत्वस्याश्रयेवर्त्तमानस्याभावस्याप्रतियोगिप्रतियोगिताकाभावत्वेनैव
तादृशवृत्तित्वाभावानांनिवेशात् तत्रचसकूटत्वकूटपदस्यांतर्भावेणोभयथातन्निवेशफलानुसंधानस्यवायुसदृशनानुसंधानस्यसमानत्वात् अन्यथासाध्याभावव
द्वृत्तित्वत्वव्यापकप्रतियोगिताकस्यव्यधिकरणधर्मावच्छिन्नाभावस्यापिप्रतियोगिताव्यापकसाध्याभावकूटवद्वृत्तित्वत्वकत्वाभावादेवव्युदासात्तमादायव्यभिचारि राम
ण्यतिव्याप्तिवारणार्थंग्रंथकृताकूटपदोपन्यासानौचित्यापत्तेरितिध्येयम्। धूमइतिनातिव्याप्तिरितिपरेणान्वयः। एवमग्रेपि इदमापाततः साध्यतावच्छेदकसम्बन्धा २०

वच्छिन्नाभावप्रवेशेऽप्यत्रातिव्याप्तेर्दुरुद्धरत्वात् साध्याभाववत्संयुक्तत्वसामान्याभावस्य कुत्रापि संयोगेन वृत्तिमत्त्वासत्त्वात् वन्ह्यवयवमात्रसंयुक्तवस्तुनोऽसत्त्वादिति ध्येयम्। ननु सम्बन्धविशेषाविवक्षायां प्रलयोत्पन्नकमते ध्वंसनित्यरूपादिकमेव वन्ह्यभावकूटाधिकरणं वाच्यं जन्यविभुमूर्त्तानां यथायोगं कालिकसंयोगादि कूटविशेषणताभिर्वन्हिमत्त्वेन द्रव्यस्य वन्ह्यभावकूटवत्त्वविरहाद्वन्ह्यसमानकालीनस्य धूमसंयोगिद्रव्यस्यासत्त्वात् तथा च तत्र साध्याभावकूटवति हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्ध्यैव न धूमेति व्याप्तिः समवायेन धूमस्य हेतुत्वे तु विरुद्धत्वादेव तद्व्युदाससंभवाद्त आह संयोगेन चेति। तथात्वे वन्हेः साध्यत्वे तथा चात्र वन्ह्यभावाधिकरणं यन्नित्यरूपादिकं तत्र हेतुतावच्छेदकसम्बन्धेन तद्वृत्तित्वस्य रूपत्वादौ प्रसिद्धस्याभावो वर्तत एव वन्ह्यवयवत्वे इत्यतिव्याप्तिः स्याद्यदि साध्यतावच्छेदकसंबन्धेन साध्याभावस्य प्रवेशो न स्यादिति भावः। ननु समवायेन वन्ह्यभावस्य वन्ह्यवयवत्वासमानाधिकरणत्वात् अग्रे वक्ष्यमाणेन साध्याभावानां हेतुसामानाधिकरण्यविशेषणेनैव न तादृशाभावमादायोक्तहेतावतिव्याप्तिरतो हेत्वन्तरमाह पर्वतेति अत्र समवायेन वन्ह्यभावस्य पर्वते संयोगेन वन्ह्यभावस्य च वन्ह्यवयवे हेतुसमानाधिकरणत्वात् तदुभयघटितसाध्याभावकूटाधिकरणं यन्नित्यरूपादिकं तत्समवेतत्वाभावस्य तादृशसंयोगहेतौ सत्त्वाद्भवत्यतिव्याप्तिः यत्तु संयोगेन वन्हेः साध्यत्वे वन्ह्यवयवस्य विरुद्धत्वात् हेतौ साध्यसामानाधिकरण्यविशेषणेनैव वारयितुं शक्यत्वात् इत्यतः पर्वतेत्यादि हेत्वन्तरमिति। तत्तुच्छं वन्ह्यवयवेऽपि वन्ह्यन्तरस्य संयोगेन वृत्तौ विरोधविरहात् तादात्म्येन साध्यत्वानुरोधात् संबंधितामात्रस्यैव सामानाधिकरण्ये प्रवेश्यत्वादिति भावः सम्बन्धद्वयेति पर्वतस्य संयोगावच्छिन्नवन्ह्यभावानधिकरणत्वात् वन्ह्यवयवस्य च समवायावच्छिन्नवन्ह्यभावानधिकरणत्वादिति भावः नातिव्याप्तिरिति भावः प्रागुक्तरीत्या साध्याभावकूटवति नित्यरूपादौ हेतुतावच्छेदकसंबधेन वृत्त्यप्रसिद्ध्या वन्हिमान्धूमादित्यादावव्याप्तिर्वेत्यपि द्रष्टव्यं अत्र च वृत्तिनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमत एवेदमुक्तं तेन धनी चैत्रत्वादित्यादौ स्वामित्वादिसम्बन्धेन साध्यतायां नाव्याप्तिः साध्यतावच्छेदकसम्बन्धातिरिक्तसमानाधिकरणसंसर्गानवच्छिन्नप्रतियोगिताकसाध्याभावो ग्राह्य इति तु न युक्तं धनी द्रव्यत्वादित्यादौ व्यधिकरणसम्बन्धेन साध्याभावस्यैव तादृशत्वेनातिव्याप्तिप्रसंगात् ननु साध्याभावो यदि साध्यतावच्छेदकरूपेण विवक्षितस्तदा प्रमेयं वाच्यत्वादित्यत्राव्याप्तिः प्रमेयत्वावच्छिन्नप्रतियोगित्वाप्रसिद्धेः न च साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभाव एवाभावो वक्तव्यः तथा चावृत्तिगगनादिना प्रमेयादेरभाव एव तत्र सुलभ इति वाच्यं घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादावतिव्याप्तिस्तादृशगुणत्वस्य घ्राणग्राह्यगंधत्वापेक्षया गुरुत्वेन प्रतियोगितानवच्छेदकतया व्यधिकरणधर्मावच्छिन्नाभावानामेव तादृशसाध्याभावत्वादत आह। तथेति स्वप्रतियोगिताप्रतियोगिताव्यापकसाध्यतावच्छेदकेत्यस्य फलमाह। पृथिवीत्वाभावादाविति तत्र हि पक्षो घटादिः। तथा च पटघटावृत्तित्वावच्छिन्न

भावघटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या पृथिवीत्वाभाववज्जलत्वादित्यादौ नाव्याप्तिः प्रतियोगितायाः पदत्वाद्यावत्पिसत्वेन साध्यावच्छेदकस्य तद्व्यापकतया
तादृशाभावानां लक्षणाघटकत्वात् प्रतियोगिभेदेपि एकधर्मावच्छिन्नप्रतियोगिताया एकत्वादिति भावः। सद्धेतावित्ति नाव्याप्तिरित्यन्वयः वह्निमान्धूमादित्यत्र सा
ध्यतावच्छेदकसम्बन्धेन विपक्षीभूततज्जलावृत्तित्वावच्छिन्नाभावकूटस्य गुणादौ द्रव्यं पृथिवीत्वादित्यादौ च विपक्षीभूतरूपरसादिप्रत्येकासमवेतसामान्याभावकूट
स्य जात्यादावधिकरणतासत्त्वात्तदप्रसिद्धिनिबंधनाव्याप्तेरुक्तस्थले विरहात्तदुभयं नोदाहृतं ननु यावत्तामेकाधिकरण्यं तावत्समुदायस्य विवक्षायां नोक्ताव्याप्तिरत आह।
पृथिवीत्वादाविति साधनसमानाधिकरणत्वेन साध्याभावस्य विशेषणीयत्वेन जातित्वावच्छिन्नाभावमादाय नातिव्याप्तिः संभवदित्यादि पदमुपात्तं तथा च जलासमवेतत्वा
वच्छिन्नाभावस्य तेजोसमवेतत्वावच्छिन्नाभावस्य च साधनसमानाधिकरणत्वात् तदुभयघटितसाध्याभावकूटवतिजात्यादौ प्रकृतहेतोः सत्त्वादतिव्याप्तिरिति भावः द्रव्य
त्वस्य समवायेन हेतुत्वे तादृशसाध्याभावकूटवतिजात्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्ध्यैव नातिव्याप्तिः स्यादत उक्तं द्रव्यत्वप्रकारकेति सामान्यादौ स्वरूपसम्बन्धेन
वृत्तिर्वाच्यत्वात्सर्वेवसु लभा प्रमा विशेष्यत्वादाविति नातिव्याप्तिरित्यन्वयः तादृशभ्रमप्रतीति विषयत्वमादाय जात्यादावपीत्यतः प्रमेति अत्र प्रतियोगितान्यापकत्वं सा
ध्यतावच्छेदकताघटकसम्बन्धेन ग्राह्यं तेन नित्यज्ञानवत्तस्तादात्म्येन साध्यतायामीश्वरत्वादिहेतौ घटान्यभेदस्य पटान्यभेदस्य च द्वयोर्विषयतासम्बन्धेन प्रतियोगितान्या
पकीभूतनित्यज्ञानात्मकसाध्यतावच्छेदकव्यापकप्रतियोगिताकयोरेकाधिकरणाप्रसिद्धावपि नाव्याप्तिः नवातादृशएवसाध्ये द्रव्यत्वप्रकारकप्रमाविशेष्यत्वादित्यत्र पृथि
व्यादौ साधनसमानाधिकरणस्य पृथिव्यादिनवद्रव्याणां प्रत्येकभिन्नद्रव्यभेदस्य कूटवतिगुणादौ हेतोरसत्त्वेप्यतिव्याप्तिः नन्वेवं वह्निमान्धूमो यभवान्धूमादित्यत्राव्याप्तिः प्र
तियोगितामात्रस्यैव प्रत्येकपर्य्यवसितत्वेन ताप्रतिपर्य्याप्त्याख्यसाध्यतावच्छेदकताघटकसम्बन्धेन कस्याप्यव्यापकतया निरुक्तसाध्याभावाप्रसिद्धेरिति वाच्यं एकविशिष्ट
परत्वानतिरिक्तस्योभयत्वस्य सार्वभौममते पर्य्याप्तिभिन्नसम्बन्धेनैव साध्यतावच्छेदकत्वादिति भावः साध्यतावच्छेदकव्यापिकाप्रतियोगितेत्यस्य फलमाह। नापीति घट
त्वाभाववत्त्वेन साध्यत्वे साध्याभावकूटवत्त्वं घटस्यैव सुलभमत उक्तं। अभावत्वादिनेति आदिना प्रमेयरूपग्रहः तथा चाभाववान्प्रमेयवान्वा घटत्वादित्यत्र साधनसमाना
धिकरणतत्तद्घटान्यत्वाभावकूटाधिकरणाप्रसिद्ध्याव्याप्तिः स्यादतः साध्यतावच्छेदकव्यापकेति। साध्यतावच्छेदकीभूताभावत्वादिव्यापकप्रतियोगिताकत्वाभावादेव
तत्तद्घटान्यत्वाभावानां लक्षणाघटकत्वादिति भावः अत्र स्वन्यूनवृत्तिधर्मानवच्छिन्नाया एव प्रतियोगितायाः साध्यतावच्छेदकसमनैयत्यं वाच्यं तेन घटत्वाभावत्वेन प
टत्वाभावत्वेन चाभावप्रमेयसामान्याभावयोरेकाधिकरणाप्रसिद्धावपि नोक्ताव्याप्तिः तादवस्थ्या घटत्वाभावत्वादेः अभावप्रमेयनिष्ठप्रमेयसामान्यनिष्ठप्रतियोगिता

न्यूनवृत्तित्वेनतादृशप्रतियोगिताकाभावानां लक्षणाघटकत्वात् एवंसाध्यसामानाधिकरण्यमपिहेतौवक्तव्यं तेनसत्तावत्समवेतत्वत्वसमनियतप्रतियोगिताकस्यव्यधिकरणध
र्मावच्छिन्नाभावस्यैववृत्तिमद्वृत्तित्वात्तादृशस्यचयावत एव हेतौसत्वेपिजात्यभाववान् द्रव्यत्वादित्यादिविरुद्धहेतौनातिव्याप्तिरितिध्येयं यद्यपिघटवृत्तित्वविशिष्टवाच्यत्वाभा
वस्यघटान्यवृत्तित्वविशिष्टवाच्यत्वाभावस्यचद्वयोरेकाधिकरणाप्रसिद्ध्यावाच्यत्वेयत्वादित्यादावव्याप्तिः नचघटादिवृत्तित्वविशिष्टवाच्यत्वत्वंनप्रतियोगितावच्छेदकं तदपे
क्षयालाघवाद्घटादिवृत्तित्वविशिष्टत्वस्यैवतथात्वात् तादृशवैशिष्ट्यावच्छिन्नाभावानांसाध्यतावच्छेदकसमव्याप्तप्रतियोगिताकत्वाभावादेवव्युदासः घटवृत्तित्वविशिष्टव
स्तुमात्रएवतत्प्रतियोगितासत्वादितिवाच्यं वाच्यत्वनिष्ठाधेयताविशेषणघटावच्छिन्नप्रतियोगिताकाभावस्यतादृशसम्बन्धेनघटान्यावच्छिन्नप्रतियोगिकाभावस्यचद्वयो
स्तथाप्येकाधिकरणाप्रसिद्ध्याव्याप्तितादवस्थ्यात् नचाधेयताविशेषणघटादेः प्रतियोगितावच्छेदकत्वेमानाभावः तस्यत्वयाप्यवश्यंवाच्यत्वात् अन्यथाघटवृत्तित्वविशिष्ट
वाच्यत्ववान् द्रव्यत्वादित्यादावतिव्याप्त्यापत्तेः गुरुतरतादृशवाच्यत्वत्वावच्छिन्नाभावाप्रसिद्ध्याघटवृत्तित्वविशिष्टत्वावच्छिन्नाभावस्यसाध्यतावच्छेदकसमनियतप्रतियोगिता
कत्वाभावेनव्यधिकरणधर्मावच्छिन्नस्यैवघटवृत्तित्वविशिष्टवाच्यत्वाभावस्यलक्षणकत्वात् तथापिदूषणमिदंस्फुटतयोपेक्ष्याह द्रव्यत्वेत्यादि ननुसार्वभौमानांमतेविरुद्धयोरुभ
यत्वस्यातिरिक्ततयापिसमानाधिकरणयोरेकविशिष्टापरत्वमेवोभयत्वं तथाचपृथिवीत्वविशिष्टद्रव्यत्वत्वद्रव्यत्वविशिष्टपृथिवीत्वत्वमेवसाध्यतावच्छेदकंपर्यवसितमितित
त्समनियतप्रतियोगिताकत्वाभावादेतदुभयान्यतरत्वावच्छिन्नाभावमादायनातिव्याप्तिः तत्प्रतियोगितायाः पृथिवीत्वेसत्वेननिरुक्तसाध्यतावच्छेदकस्यतद्व्याप
कत्वादतआह अपिचेति उद्देश्यविधेयस्थलेसमानलिंगकत्वस्यातंत्रत्वात् पृथिवीव्यामन्यत्वविशिष्टद्रव्यत्वस्यसाध्यताभ्रमनिराकर्तुंपक्षमुल्लिखति द्रव्यमिति पृथ्वीतिपृथि
व्यन्यत्वेसतिद्रव्यान्यासमवेतसकलद्रव्यसमवेतवदित्यर्थः नचसकलद्रव्यवृत्तित्वान्तर्भावेणद्रव्यत्वस्यसाध्यत्वेद्रव्यान्यासमवेतत्वावच्छिन्नाभावस्यतादृशसाध्य
तावच्छेदकसमनियतप्रतियोगिताकत्वाभावाद्गुरुतरसकलद्रव्यवृत्तित्वघटितद्रव्यत्वत्वावच्छिन्नात्यंताभावस्याप्रसिद्धत्वादग्रेद्रव्यत्वत्वावच्छिन्नाभावमादायातिव्या
प्तेरसंगत्यापत्तिरितिवाच्यं द्रव्यत्वादीत्यत्रद्रव्यपदेनद्रव्यमित्याकारकतद्बुद्धिप्रकारत्वस्यैवाग्रेवक्तव्यत्वात्तस्यचद्रव्यान्यासमवेतत्वमपेक्ष्यापिलघुत्वेनप्रतियोगिताव
च्छेदकत्वसंभवादितिभावः द्रव्यत्वत्वादीत्यत्रादिनापृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वस्यपृथिवीवृत्तित्वविशिष्टद्रव्यत्वत्वस्यचद्वयोरेवावच्छेदकयोः परिग्रहः ननुसाध्य
तावच्छेदकान्यसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावएवसाध्याभावपदार्थोवाच्यः तथाचविशिष्टद्रव्यत्वस्यसाध्यतायांद्रव्यत्वसामान्याभावस्यातथात्वा
न्नातिव्याप्तिः गुरुधर्मस्यप्रतियोगितावच्छेदकत्वोपगमाच्च तादृप्येणसाध्यतायामपिनातिव्याप्तिरतआह किंचेति ननुविशिष्टस्यानतिरिक्तत्वमते द्रव्यत्वादिसामान्याभा

जाग्य वस्यविशिष्टसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावादेवतमादायनातिव्याप्तिरत आह। किंचेतिप्रांचः सद्धेतौ वायुत्वादौ अप्रसिद्धेरितिकालस्यसकलरूपवत्वे
२२ पिसाध्यवत्ताधीविरोधिताघटकसमवायसम्बन्धेनतदनधिकरणत्वादितिभावः शंकते यावतामिति तथाचव्यधिकरणधर्मावच्छिन्नाभावैरैक्याधिकरण्यायन्नस्य त
द्रूपस्याधिकरणवृत्तित्वप्रसिद्ध्यैवनाव्याप्तिरितिभावः विवक्षितेपीत्यपिनातद्विवक्षायामपिवक्ष्यमाणातिव्याप्तिः सूचितानन्तुयावतांमिथः सामानाधिकरण्यंतावत्त्व
मुदेयोविवक्षितःकिंवायावतांसाध्याभावानामभावांतरेणसामानाधिकरण्यंतावत्त्वसमुदायोभिप्रेतःप्रथमेइदमिति। अत्रेदमिति पृथिव्यांविशेषणं नतुपक्षनिर्देशः तथासतिघट
तद्वायुहूत्वपटतद्वायुहूत्वंकुड्यतद्वायुहूत्वादीनामेवतद्वायोमिथःसामानाधिकरण्यापन्नसाध्याभावानामधिकरणेतद्वायौवृत्तिमत्वादेववायुत्वादिहेतावतिव्याप्त्यनुपपत्तेः
एतत्पृथिवीसमवेतप्रतियोगिकाभावस्यसाध्यत्वेवायुत्वादेः सद्धेतुत्वात्समवेतत्वापेक्षयागुरुत्वेनैनतत्पृथिवीसमवेतत्वावच्छिन्नाभावाप्रसिद्ध्यैवसाध्यत्वायोगाद्गुणपदं न
न्वेतत्पृथिवीवृत्तिगुणत्वावच्छिन्नाभावस्यसाध्यकमपिवायुत्वादिकंसद्धेतुरेवप्रलयेपरमाणवुत्पत्तिकालेचावयविनिवायोतत्सत्वात् साध्यांतरमाह सत्तान्येति अत्रपृथ्वीप
दंएतत्पृथ्वीपरं अन्यथाहूत्वादिव्यक्तीनांतद्वायोमिथःसामानाधिकरण्यापन्नसाध्याभावतयावायुत्वादेस्तत्कूटाधिकरणीभूतवायुवृत्तित्वेनैवातिव्याप्त्यसंभवापत्तेरितिध्येयम्
अत्रापि एतत्पृथिवीसमवेतप्रतियोगिकाभावस्यकेवलान्वयितयातत्साध्यकवायुत्वादेःसद्धेतुत्वात्समवेतत्वापेक्षयागुरुत्वेनैतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्यचाप्रसि
द्ध्यासाध्यत्वायोगात्सत्तान्यपदं नचसत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावोप्यप्रसिद्धः द्रव्यत्वत्वस्यैवतदवच्छेदकत्वादितिवाच्यंसकलद्रव्यवृत्तित्वादिघटितद्रव्यत्वत्व
स्यैवताद्दशसमवेतत्वापेक्षयागुरुत्वेनानवच्छेदकत्वात्सत्तान्यसमवेतत्वावच्छिन्नाभावस्याप्रसिद्धत्वात्समवेतत्वावच्छिन्नाभावस्यसाध्यत्वेसमवेतमात्रस्यैवतदभावत्वेनमिथः
सामानाधिकरण्यापन्नसमवेतकूटवतिवायौहेतोःसत्वादेवनातिव्याप्तिरतःपृथिवीपदं ननुवायुत्वस्योक्तसाध्यसामानाधिकरण्याभावादेवनतत्रातिव्याप्तिरतोहेत्वन्तरमाह
रूपवदिति अयंहेतुगुणादौसाध्यसमानाधिकरणः रूपात्यन्ताभावस्यपृथिव्यामुत्पत्तिकालावच्छेदेनसत्वात्तत्रातिव्याप्त्यसंभवाद्रूपवदन्यत्वानुधावनंरूपवद्भेदस्यापितदानीं
पृथिव्यामुपगमेत्वाह। द्रव्यादाविति आदिनावायुरूपान्यतरत्वादेःपरिग्रहः ताद्दशेति मिथःसामानाधिकरण्यापन्नेत्यर्थः हितीयेत्वाह वस्तुतइति ताद्दशाभावेतिव्यधिकर
णधर्मावच्छिन्नसाध्याभावेत्यर्थः सहस्रेति अवच्छेदकभेदेनाभावभेदमभ्युपेत्योक्तं दुर्वारैवेति ननुयावतामेकवृत्तित्वं तावत्कूटवत्वोक्त्यानाप्रसिद्धिः नवाप्रागुक्तातिव्या
प्तिः किंचसत्तान्यैतत्पृथिवीसमवेतशून्यत्वाभावोद्रव्यत्वस्वरूपएवलाघवात् नतुसत्तान्यैतत्पृथिवीसमवेतमात्रंबहूनांतथात्वेगौरवात् ततः परस्परसामानाधिकरण्यापन्न राम
ताद्दशद्रव्यत्वादिस्वरूपसाध्याभावस्तोभवतिहेतोसत्वादेवनातिव्याप्तिरितिब्रूयात्तदादोषांतरमाह किंचेतियत्तुरूपसामान्याभावस्याभावोनुगतप्रतीतिबलादतिरिक्तएवेति २२

तद्वृत्तिहेतोः सत्वासत्वाभ्यांनोक्तातिव्याप्त्यव्याप्त्योः संभवइत्यतः किंचेति तत्तुच्छेद इदानीमेवाभावाभावस्यातिरिक्तत्वमंगीकृत्यदोषनिरासेभूतत्वमूर्तत्वान्यतरत्त्वेनाभावाभाव
स्यातिरिक्तत्वादग्रेभूतत्वमूर्त्तत्वेत्यादिनातिव्याप्त्यभिधानस्यसंदर्भविरोधापत्तेः साध्याभावकूटवद्वृत्तित्वस्यसंयोगसमवायादिप्रत्येकप्रवेशमभिप्रेत्याह। धूमादाविति अव्याप्ति
रितिनिर्वन्हिसमवेतत्वत्वावच्छिन्नाभावस्ययावदन्तर्गतस्यधूमादावसत्वादितिभावः सम्बन्धसामान्येनतादृशवृत्तित्वस्यप्रवेशमभिप्रेत्याह। साध्येतेति कालादाविसादि
पदेनदिशःपरिग्रहः व्यभिचारिणि पृथिवीद्रव्यत्वादित्यादौनतु धूमवान्वन्हेरित्यादौ तत्रहेतुतावच्छेदकसम्बन्धेनवृत्तित्वविवक्षायामप्यतिव्याप्तेर्ध्रौव्यात् धूमाभाववत्काल
दिगादौमूर्तमात्रस्यैवसंयोगसंबंधेनवृत्तेः तत्सामान्याभावस्यहेतुताघटकसम्बन्धेनयोवृत्तिमान् तदवृत्तित्वेनलक्षणाघटकत्वादितिध्येयं सत्तादौत्यादिना समवेतादेः परि
ग्रहः शंकते साधनेति तथाचसद्धेतुस्थलेव्यधिकरणधर्मावच्छिन्नस्यसाध्याभावस्यैवसाधनसमानाधिकरणत्वात् तत्कूटवद्वृत्तित्वस्यापितादृशाभावमादायैवलक्षणसंग
तिः इत्थंचवृत्तिमद्वृत्तिपदस्यसार्थक्यंव्यतिरेकिण्यपिसंभवतीतिद्रष्टव्यं यथाचैवंसाध्यतावच्छेदकस्यस्वप्रतियोगिताव्यापकत्वदलस्यसार्थक्यंतथोपपादितंप्रागेव यद्य
पिहेतुसमानाधिकरणत्वेनसाध्याभावानानिवेशेतादृशसाध्याभावकूटवद्वृत्तित्वत्वेप्रतियोगिताव्यापकदलस्योपादानंविफलंवन्हिमान्धूमादित्यादावालोकाद्वृत्तित्वावच्छिन्ना
भावमादायाऽव्याप्तिःप्रसंगस्यतादृशाभावेसाधनसामानाधिकरणसाध्याभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावादेवव्युदासात् नचात्रकल्पे तादृशवृत्तित्वत्व
स्यप्रतियोगिताव्यापकत्वंनदेयमेवेतिवाच्यं तथासतिहेतुसामानाधिकरणसाध्याभावकूटवद्वृत्तित्वत्वव्यापकप्रतियोगिकस्यद्रव्यवृत्तित्वसामान्याभावस्यैवस्पर्शवदन्यत्व
द्वितावसत्वादग्रेभूतत्वमूर्त्तत्वेत्यादिनाऽतिव्याप्तेरसंगत्यापत्तेः तथापिवृत्तित्वालोकान्यत्वोभयत्वावच्छिन्नाभावस्यैवहेतुसमानाधिकरणसाध्याभावकूटवद्वृत्तित्वत्वव्याप
कप्रतियोगिताकस्यवृत्तिमद्वृत्तेर्द्रव्यहेतावसत्वेनतमादायाव्याप्तिवारकत्वादेवतस्यसार्थक्यं नचपर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावमादायाव्याप्तिवारणा
र्थंव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैवप्रतियोगितावश्यंविशेषणीयेति ततएववृत्तित्वालोकान्यत्वोभयाभावस्यव्युदासात्तादृशवृत्तितात्वेप्रतियोगिताव्यापकत्वस्योपा
दानंविफलमितिवाच्यं पर्वतपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभाववारणायवृत्तित्वपर्याप्त्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैवप्रतियोगितायाआवश्यकत्वात् तादृशप्र
तियोगिताकत्वस्यचवृत्तित्वालोकान्यत्वोभयाभावेपिसत्वादितिध्येयम् भूतत्वमूर्तत्वान्यतरप्रतियोगिकाभावस्यकेवलान्वयित्वात्तत्वेनसाध्येस्पर्शतदन्यत्वादिकंस
द्धेतुरेवेत्यतउक्तं अन्यतरत्वेनेति तादृशेति हेतुसमानाधिकरणोयोभूतत्वमूर्तत्वोभयघटितसाध्याभावस्तोमस्तद्वृतीत्यर्थः पृथिव्यादाविसादिना जलतेजोनिलानां प
रिग्रहः अत्रभूतत्वंविशेषगुणवत्वेसत्यात्मभिन्नत्वंनतुवहिरिंद्रियग्राह्यविशेषगुणवत्वंमूर्तत्वंस्पर्शवन्मनोन्यतरत्वंजातिविशेषोवानत्ववच्छिन्नपरिमाणवत्वं तथासति

ता० व्य० मनःपरिमाणशब्दयोरेवयत्समानाधिकरणतादृशसाध्याभाववयोरेकाधिकरणाप्रसिद्ध्यातिव्याप्त्यसंभवादितिद्रष्टव्यं ननुसाधनाधिकरणयत्किंचिद्व्यक्तिवृत्तिसाध्याभाव
२३ कूटस्यनिवेशान्नैषदोषः क्वचिदपिस्पर्शवद्भिन्नेभूतत्वमूर्तत्वोभयोरसत्वात्तदुभयान्यतरघटितसाध्याभावकूटवत्याकाशेमनसिचहेतोःसत्वात् वस्तुतःसमनियताभावा
नामैक्यमतेभूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभावभूतत्वमनस्त्वान्यतरत्वावच्छिन्नस्यमूर्तत्वगगनत्वावच्छिन्नस्यचाभावः तथाचमनस्त्वगगनत्वयोरपिभूतत्वमूर्त्तत्वा
न्यतरत्वावच्छिन्नाभावस्यसाध्यस्याभावत्वात् हेतुसमानाधिकरणतदुभयघटितसाध्याभावस्यकूटाधिकरणाप्रसिद्ध्यानातिव्याप्तिः अस्त्वेवंतिनिरुक्तसाध्याभा
वत्वानितावतांप्रत्येकावच्छिन्नस्ययदधिकरणंतद्वृत्तित्वाभाववावृत्तिमद्वृत्तयोयावंतस्तद्वृत्वमेवव्याप्तिः तथाचभूतत्वमूर्त्तत्वान्यतराभावाभावत्वावच्छिन्नस्याधिकर
णिमनस्येवहेतोःसत्वान्नातिव्याप्तिरतआह।किंचेति। ननुभूतत्वमूर्तत्वान्यतरत्वावच्छिन्नाभावाभावोनुगतव्यवहारादतिरिक्तएव ननुभूत्वमूर्त्तत्वोभयस्वरूपः तथाच
साधनसमानाधिकरणतादृशाभाववतिगगनेमनसिहेतोःसत्वान्नातिव्याप्तिरतः किंचेत्यपिवदंति गुरुचरणास्तु ननुहेतुसमानाधिकरणायावंतःपदार्थाः साध्यवृत्ति
त्वव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववन्तस्तावत्पदार्थकूटाधिकरणवृत्तित्वाभाववावृत्तिमद्वृत्तयोयावन्तस्तत्त्वंविवक्षितं।तथाचहेतुसमानाधिकरणयोर्गग
नत्वमनस्त्वयोरेवतादृशपदार्थयोरेकाधिकरणाप्रसिद्ध्यानातिव्याप्तिः निरुक्तोभयाभाववतांघटत्वपटत्वादीनामेकाधिकरणाप्रसिद्ध्यावह्निमान्धूमादित्यादावव्याप्तिर
तोहेतुसमानाधिकरण्योपादानमित्यतः किंचेती तिप्राहुः कालान्यत्वसाध्यकस्यकालिकसम्बन्धेनहेतोर्विरुद्धत्वादेवतत्रनातिव्याप्तिरतउक्तं महेति तथाचमहाकाला
न्योघटादित्यादावित्यर्थः।वृत्तिमन्मात्रस्यैवेति तथाचमहाकालवृत्तित्वसामान्याभावस्यवृत्तिमद्वृत्तित्वाभावाद्व्यधिकरणधर्मावच्छिन्नाभावस्यचयावतएवहेतौसत्वादतिव्या
प्तिरितिभावः अत्रकेचित् सार्वभौममतेसामानाधिकरण्यस्याव्याप्यवृत्तित्वात् खंडकालावच्छेदेनपटादावेववृत्तिमतिवर्त्तमानस्यमहाकालवृत्तित्वसामान्याभावस्ययाव
द्वृत्त्यधिकरणावच्छेदेनहेतावसत्वान्नातिव्याप्तिः वृत्तिमद्वृत्तयोयावन्तस्तादृशवृत्तित्वाभावायावद्वृत्त्यधिकरणावच्छेदेनतद्वृत्वस्यविवक्षितत्वात् अतएवैतद्रूपंगुण
त्वादित्यादावेतद्रूपभिन्नसमवेतत्वत्वसमनियतप्रतियोगिताकस्यव्यधिकरणधर्मावच्छिन्नाभावस्यैववृत्तिमद्वृत्तित्वेपिनातिव्याप्तिः एतद्रूपावच्छेदेनगुणत्वादेववर्त्त
मानस्यैतद्रूपभिन्नसमवेतत्वसामान्याभावस्यहेत्वधिकरणीभूतगुणान्तरावच्छेदेनहेतावसत्वादित्याहुः तच्चिंत्यं यत्तुवृत्तिमद्वृत्तयद्यत्स्ववृत्तिमद्वृत्तित्वसाध्यवद्वृत्तित्व
प्रतियोगिकत्वोभयानधिकरणत्वमर्थः। तथाचमहाकालवृत्तित्वसामान्याभावस्यापिसाध्यवद्वृत्तित्वप्रतियोगिकत्वविरहेणनिरुक्तोभयानधिकरणस्यहेतावसत्वात्म नाम०
हाकालान्योघटादित्यादौनातिव्याप्तिः नचमहाकालवृत्तित्वत्वापेक्षयालघोः कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वस्यैवमहाकालवृत्तित्वाभावप्रतियोगितावच्छेदकतयामहा २३

कालवृत्तित्वसामान्याभावस्यननिरुक्तवृत्तिमद्वृत्तित्वंवृत्तिमद्वृत्तेस्तस्यसाध्यवद्वृत्तित्वप्रतियोगिकत्वादितिवाच्यंयावंतिकालिकसम्बन्धेनमहाकालवृत्तित्वानितावदन्य
तमत्वावच्छिन्नाभावस्यतावद्धर्मिकयत्किंचिद्वृत्तिविशेष्यत्वावच्छिन्नाभावस्यवानिरुक्तोभयानधिकरणस्यहेतावसत्वेनातिव्याप्त्यसंभवात् कालिकसंबंधावच्छिन्नवृत्तित्व
त्वमपेक्ष्यतावदन्यतमत्वलक्षणाखंडभेदस्यैवलाघवेनप्रतियोगितावच्छेदकत्वौचित्यादिति तन्न तथापिनित्यज्ञानभिन्नंघटादित्यादौविषयतासम्बन्धेनहेतावतिव्याप्ते
वे ज्ञेयत्वात् नित्यज्ञानविषयतासामान्याभावस्याप्रसिद्धत्वाद्व्यधिकरणधर्मावच्छिन्नतादृशविषयत्वाभावस्ययावतएवहेतौसत्वात् नव्यास्तुसाधनसमानाधिकर
णव्याप्यवृत्तयोयावन्तःसाध्याभावाःसाध्यसामानाधिकरण्यापन्नतावत्कूटवद्वृत्तित्वाभावोविवक्षितः तथाचव्यभिचारिमात्रएवसाध्यसामान्याभावघटितकूटस्यसाध्यस
मानाधिकरण्याप्रसिद्ध्यानातिव्याप्तिःयावंतस्तादृशाःसाध्याभावाःतत्कूटाधिकरणस्यवासाध्यवत्त्वंविवक्षितंलाघवात्तादृशवृत्तित्वाभावस्यचवृत्तिमद्वृत्तित्वंयावत्त्वंनापेक्षि
तंवैयर्थ्यात् इत्थंचसाधनसमानाधिकरणायावन्तस्तादृशाःसाध्याभावासाध्याश्रयीभूततावत्कूटवद्वृत्तित्वमपिलक्षणंसाधीयइतिप्राहुः वस्तुतःपूर्वलक्षणद्वयेत्रापिवृ
त्तिमद्वृत्तयोयावन्तःसाध्याभावकूटवद्वृत्तित्वाभावास्तद्वृत्त्वावच्छिन्नाधिकरणतासामान्यकधर्मवत्वमेवव्याप्तिर्वाच्या तत्रवृत्तिमद्वृत्तित्वंसाध्याभाववद्वृत्तित्वंचदैशि
कविशेषणतयैववक्तव्यमतोनकोपिदोषःपदमाद्यधातीत्यवधा नव्यमितिदिक् एतेनेतिमहाकालान्योघटादित्याद्यवतिव्याप्तिप्रसंगेनेत्यर्थःपरास्तमितिपरेणान्वयः
अत्रवाच्यत्वेपत्वात्सत्तावान्द्रव्यत्वादित्यादिनानाव्यक्तिवृत्तिसाध्यकसद्धेतौतद्व्यक्तिवृत्तित्वविशिष्टसाध्याभावस्यतदन्यव्यक्तिवृत्तित्वविशिष्टसाध्याभावस्यचद्व
योःसाधनसमानाधिकरणयोरेकाधिकरणाप्रसिद्ध्यासाधनाधिकरणयत्किंचिद्व्यक्तिवृत्तिकूटवद्वृत्तित्वसामान्याभावानांहेतावसत्त्वेनाव्याप्ति रतःप्रतियोगिकांतयाव
द्भावविशेषणंविशिष्टसत्तावान्जातेरित्यादौजातिसमानाधिकरणस्यसाध्यीभूतसत्त्वव्यापकतावच्छेदकरूपावच्छिन्नाभावस्यव्यधिकरणधर्मावच्छिन्नाभावत्व
नियमाद्वृत्तिमद्वृत्तेस्तत्कूटवद्वृत्तित्वाभावस्ययावतएवहेतौसत्वादतिव्याप्तिरतःसाध्यतावच्छेदकावच्छिन्नेति तथाचगुणान्यत्वाभावकर्मान्यत्वाभावयोरप्युक्तरू
पावच्छिन्नप्रतियोगिताकत्वादुभयघटितकूटाधिकरणाप्रसिद्धैवनातिव्याप्तिः।अत्रापियेनसम्बन्धेनव्यापकतातेनाभावोग्राह्यःतेनसमवायावच्छिन्न वन्ह्यभावघटि
तकूटवद्वृत्तित्वाभावस्यवन्ह्यवयवत्वादिनिष्ठस्यहेतावसत्वेपिवन्हिमान्तत्सर्वतत्वादित्यादौनाव्याप्तिः नचविशेषणताविशेषेणवसाध्यव्यापकत्वंतेनसंबंधेनतादृश
रूपावच्छिन्नाभावश्चग्राह्यःसाध्यस्यगुणसामान्यस्याभावद्रूपाद्युत्तरग्रंथेविरोधात्गुणस्यदैशिकविशेषणतासंबंधेनगुणाव्यापकत्वात् परंतुसाध्यतावच्छेदकसंब
न्धेनैवव्यापकत्वंतादृशरूपावच्छिन्नाभावंचनिवेशयंतितत्तुच्छवृत्त्यनियामकसंबंधेनसाध्यतायांतदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिप्रसंगात् धूमवान्व

जा॰व्या न्हेरित्यादावतिव्याप्तेश्च संयोगेनद्रव्यस्याव्याप्यवृत्तितयाव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानामेवसंयोगेनद्रव्याभावानांव्याप्यवृत्तित्वात् तत्कूटवद्वृत्तित्वसामान्या
२४ भावस्यवृत्तिमद्वृत्तेः तादात्म्येनप्रमेयव्यापकतावच्छेदकंयत्प्रमेयत्वादितेनसम्बन्धेनतदवच्छिन्नाभावाप्रसिद्ध्यातादात्म्येनप्रमेयसाध्यकसद्धेतावव्याप्तेरसकृदावेदि
तत्वाच्च नचद्रव्यंघटादित्यादौकालिकसम्बन्धेनहेतावतिव्याप्तिः साधनसमानाधिकरणस्यद्रव्यत्वाभावकूटस्यकालिकसंबन्धेनाधिकरणमहाकालेहेतुतावच्छेदकसं
म्बन्धेनवृत्तिमन्मात्रस्यैववृत्तेरितिवाच्यं दैशिकविशेषणतयातादृशयावदभावाधिकरणत्वस्यनिवेशनीयत्वादितिभावः तद्घटभिन्नंघटत्वादित्यादौसाध्यव्यापकताव
च्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावाधिकरणीभूततद्घटवृत्तित्वस्यव्यधिकरणधर्मावच्छिन्नाभावोघटत्वेपीत्यतउक्तं यावंतदिति नचदैशिकविशेषणतयातद्घ
टभिन्नत्वाभावस्याधिकरणाप्रसिद्धेवनातिव्याप्तिः कथंयावत्त्वविशेषणमितिवाच्यम् तथापितद्घटान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापियावदंतर्गतस्यसाध्याभावस्य
तादृशसम्बन्धेनतदधिकरणीभूततद्घटवृत्तित्वस्यव्यधिकरणधर्मावच्छिन्नाभावस्यघटत्वहेतौसत्वादतिव्याप्तिरतोयावन्तइति वन्हिसंयोगसामान्याभाववान्संयोगसा
मान्याभाववान्वाधूमादित्यादावव्याप्तिः साधनसमानाधिकरणस्यसाध्यव्यापकतावच्छेदकीभूतसंयोगसामान्याभावत्वावच्छिन्नप्रतियोगिताकस्यवन्हिसंयोगाद्यात्मक॰
स्यकूटाधिकरणाप्रसिद्धेरतोव्याप्यवृत्तिपदमित्याह। केवलेत्यादिना केवलान्वयिनदूसनेनसाध्यव्यापकत्वमाविष्कृतंसंयोगा दीत्यादिनावन्हिसंयोगत्वावच्छिन्नाभाव॰
स्योपग्रहः तेनप्राचां मतेद्रव्येसंयोगसामान्याभावस्यासत्वेपिनक्षतिः दैशिकव्याप्यवृत्तिसाध्यकप्रयोजनमुक्त्वाकालिकाव्याप्यवृत्तिसाध्यकेतदाह एवमिति ननुतादृ
शरूपावच्छिन्नप्रतियोगिताकानांवास्तवाभावानामेवलक्षणघटकत्वात्संयोगाद्यात्मकाभावमादायनाव्याप्तिरतउक्तं एवमितीत्यपिकेचित् नव्याप्यवृत्तिरिति। तथाच
गुणसामान्याभावस्यसाधनसमानाधिकरणत्वेपिव्याप्यवृत्तित्वाभावादेवगुणवान्द्रव्यत्वादित्यादौनाव्याप्तिः अन्यथागुणसामान्याभावस्यापिसाधनसमानाधिकरण॰
साध्याभावतयातद्घटितकूटाधिकरणसमवेतत्वसामान्याभावस्यवृत्तिमतिनित्यैकत्वादौप्रसिद्धस्यद्रव्यत्वहेतावसत्वादव्याप्तिरेवस्यादितिभावः स्वसमानाधिकरणेत्य
स्यव्या वृत्तिमाह उक्तरूपेति साध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः क्वचिदिति वन्हिमान्धूमादित्यादौघटपटाद्यात्मकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटस्या
पिनिरुक्ताभावतयातदधिकरणाप्रसिद्धिनिबंधनाव्याप्तिवारणार्थमेवस्वसमानाधिकरणेत्युक्तमितिभावः तद्घटभिन्नंपटत्वादित्यादौवाच्यज्ञेयत्वादित्यादौवसाध्यव्याप॰
कतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वंतद्घटएवप्रसिद्धमतस्तत्राव्याप्त्यसंभवात् क्वचिदित्युक्तम् अत्रचहेत्वधिकरणयत्किंचिद्व्यक्तौदैशिकविशेष राम
णतयावर्तमानत्वमेवहेतुसामानाधिकरण्यंबोध्यं तेनपृथिवीद्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौजलेतेजसिचसाधनसमानाधिकरणस्यजलान्यत्वाभावस्यतेजोवृत्त्य २४

भावस्य च निरुक्तरूपावच्छिन्नप्रतियोगिताकत्वात् तदुभयघटितकूटवज्जलादौ हेतोरवृत्तित्वेपि नातिव्याप्तिः हेत्वधिकरणजलादिप्रत्येकनिष्ठं यत्तादृशकूटं तदधिक
रणे जलादौ हेतोः सत्वादिति भावः उक्तसमुदायेति तादृशाभावकूटवदवृत्तित्वहेतुतावच्छेदकसंबंधेन ग्राह्यं तेन द्रव्यं भिन्नं सत्वादित्यादौ साधनसमानाधिकरणसाध्याभाव
कूटाधिकरणे महाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तौ वपि नातिव्याप्तिः तादृशवृत्तित्वाभाववत्तादृशवृत्तित्वत्वसमनियतप्रतियोगिताको ग्राह्यः तेन पर्वतवृत्ति
त्वादिसामान्याभावस्य वृत्तित्वालोकान्यत्वोभयत्वावच्छिन्नाभावस्य च हेतावसत्वेपि वन्हिमान्धूमादित्यादौ वाच्यज्ञेयत्वादित्यादौ नासंभवः अधिकमभिहितं प्राक्
वृत्तिमद्वृत्तिमद् इत्यत्रापि वृत्तिमत्वं हेतुतावच्छेदकसम्बन्धेनैव ग्राह्यं तेन संयुक्तत्वसामान्याभावस्यापि तादृशस्य समवायेन वृत्तिमति ज्ञानादौ प्रसिद्धस्य हेतावसत्वेपि व
न्हिमान् धूमादित्यादौ नाव्याप्तिरित्यर्थः साध्यवत्ताधीविरोधिताघटकसम्बन्धेन कूटाधिताया: पूर्वमुक्ताया: प्रकृतलक्षणाघटकत्वात्तन्नोक्तम् इत्यादिकमित्यादिय
देन गुरोः प्रतियोगितावच्छेदकत्वमते तादृशवृत्तित्वत्वावच्छिन्नाभावावृत्तिमद्वृत्तियोग्यावन्तस्तद्वत्वमित्यादेरस्सूचनं इति पुच्छलक्षणं समाप्तं अभावबुद्धौ प्रतियो
गितावच्छेदकविशिष्टप्रतियोगिज्ञानत्वेन हेतुतायाः स्वयमनङ्गीकाराद्वा वार्थमाह विशेषणेति ननु घटत्वेन पटो नास्तीत्यादिबुद्धेः घटत्वादिविशिष्टवैशिष्ट्यावगाहित्वमे
वासिद्धमत आह अभावेत्यादि नास्वातन्त्र्येणेति न घटत्वादेः प्रतियोगिवृत्तित्वमविषयीकृत्येत्यर्थः तद्धर्मावच्छिन्नप्रतियोगित्वसंसर्गकाभावप्रत्ययस्य तादृशसम्बन्धेन तद्धर्म
विशिष्टवैशिष्ट्यावगाहित्वनियमादिति भावः ननु तद्घटत्वेन घटो नास्तीत्याकारकसमानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षे व्यभिचारान्नोक्तनियम इत्यत आह घटो ना
स्तीत्येवेति तथा च विशेषधर्मेण सामान्याभावोऽप्रसिद्ध एव तद्व्यक्तित्वेन घटो नास्तीतिप्रतीतेः घटे तद्व्यक्तित्वाभावमात्रावगाहित्वात् तत्र हेत्वभावादावेव न व्यभिचारः अन्य
था सामान्यरूपेण विशेषाभावस्यापि स्वीकारापत्तेर्वाच्यत्वेन घटो नास्तीत्यपि प्रत्ययप्रसंगादिति भावः प्रकृते योजयति तदिहेति इह घटत्वेन पटो नास्तीत्यभिलापस्थले त
स्य व्यधिकरणधर्मस्य अवगाहतद् इति व्यधिकरणधर्मेण विशिष्टप्रतियोगिनमित्युक्ते नान्वयः न च तत तद् इति प्रमाया एवार्थसाधकत्वादिति भावः ननूक्तव्याप्तावप्रयो
जकत्वाद्घटत्वादेः प्रतियोगिवृत्तित्वमनवगाह्यापि तदवच्छेदकत्वावगाहिप्रत्ययसंभवाद्व्यधिकरणधर्मावच्छिन्नाभावः सोऽस्तीत्यत आह यदि पुनरिति स्वरसवाहि य
थार्थः सं च पटे घटत्वमनवगाहत एव संभवतीति भावः घटत्वेन पटो नास्तीत्यादिपदेन घटत्वेन द्रव्यं नास्ति द्रव्यत्वेन पटो नास्ति इत्याद्यनुभवस्योपग्रहः तुल्ययुक्त्या
तद्वृत्तिधर्मेण तस्यैव विशेषरूपेण सामान्यस्य रूपेण च विशेषस्याभावे बाधकाभावादिति ध्येयम् घटत्वेन घटो नास्तीति पाठे घटत्वेनेत्यस्य घटत्वविशिष्टेनेत्यर्थः तेन ता
द्रूपेण प्रतियोग्यंशे घटत्ववत्तामनवगाह्य जाते समानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्ष एवोक्तनियमस्य व्यभिचारो दर्शितः तादृशाभावेति स्वसमनियतान्यधर्माव

सामान्यर

च्छिन्नप्रतियोगिताकाभाववारणमित्यर्थः तेनसामान्यरूपेणविशेषस्यविशेषरूपेणचसामान्यस्याभावः संगृहीतः यत्तुद्रव्यत्वेनघटोनास्तीतिप्रतीतिर्घटत्वाद्यवच्छि
न्नाभावेनैवोपपत्तौसामान्यरूपेणचविशेषाभावादौमानाभावइतितत् प्रागेवदूषितमिति यदपिसंयोगसंसर्गकघटत्वाद्यवच्छिन्नाभावत्वावच्छेदेनलाघवात्तादृशसंबंधे
नघटत्वावच्छिन्नस्यविरोधित्वकल्पनात् संयोगेनघटा दिमतिघटत्वादिनापिघटाद्यभावस्यासंभवइतिकैश्चिदुक्तम् तदपिमंदम् तावतापिगगनत्वादिनाघटादेर्वा
च्यत्वत्वादिनाज्ञेयत्वादेश्चव्यधिकरणधर्मावच्छिन्नाभावस्यदुर्वारत्वादितिगगनादेरधिकरणस्यस्वरूपसंसर्गकवाच्यत्वत्वाद्यवच्छिन्नाभावस्यचाप्रसिद्ध्यातत्रवि
रोधस्यकल्पयितुमशक्यत्वादितिदिक्॥ ॥ इतिश्रीजगदीशभट्टाचार्यकृताचतुर्दशलक्षणीसमाप्ता॥ ॥ सम्वत् १९३० ॥ माघकृष्ण ३० अमावास्यायां रवौ ॥

वाराणसीप्रसादस्यनियोगेनतुयत्नतः॥ काशीसंस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥१॥ श्रीकाशीजीमेज्ञानवापीकेपूर्वफाटकपरश्रीविश्वनाथ
जीकेपासमहाराजश्रीवलालदुबेजीकेमकानमेकाशीसंस्कृतमुद्रायन्त्रमेछपीजिनकोलेनाहोयउन्होनेइसकार्यके
सम्पादकबाबूवाराणशीप्रसादपाकचौरीगलीमेभाईप्रतापसिंहजीकेदुकानपर
मिलेगी

